तर्कसंग्रह of अन्नम्भट्ट with the commentaries न्यायबोधिनी and पदकृत्य – [illegible] with explanatory Notes by पं. कनकलाल शर्मा – Edited by पं. रामतेजपाण्डेय.

5/e, Benares, 1931.

(6)

Bill No. 5/07-08

187

2008-0647

website www:HUDAonline.com.

The Sectors indicated above are tentative. Applications on the p

(Rs. 43,300/-).

THE

# TARKA SANGRAHA

of

## Annam Bhatta,

With

The commentaries Nyayabodhini of Pandit Goverdhana and Padakritya of Pandit Chandraja Singh.

Commentated with Explanatory notes

by

**Pandit Kanaka Lal Sharma.**

Edited by

**Pt. Ram Tej Pandey**

**Sahitya Shastry.**

**Fifth Edition.**


Published

by

**Master Khelari Lal and Sons,**

Proprietors of the 'Sanskrit Book Depot,'

BENARES.

1931

~~Price 6 Annas.~~

श्रीमदन्नम्भट्टविरचितः—

# तर्कसंग्रहः ।

पं० गोवर्द्धनकृत-न्यायबोधिनी-

पं० चन्द्रजसिंहकृत—पदकृत्यव्याख्योपेतः ।

ठक्कुरोपनामक पं० श्रीकनकलालशर्मणा

उपयुक्तविषमस्थलटिप्पणीभिः समलङ्कृतश्च ।

साहित्यशास्त्रि-

पं० रामतेजपाण्डेयेन संस्कृतः ।

स च

वाराणस्याम्

मास्टर खेलाड़ीलाल ऐण्ड सन्स

महानुभावैः

हितचिन्तकमुद्रणयन्त्रालये

कृ० ब० पावगीद्वारा मुद्रयित्वा प्रकाशितः ।





विक्रमाब्दाः १९८८ ।

श्रीः

# भूमिका ।

अये विद्वत्कुलकमलदिवाकराः, न्यायाटवीविहरणपञ्चाननाः ! विद्वांसः !! जानन्त्येव भवन्तो यत्परमकारुणिकेन ऋषिप्रवरेणाऽक्षपादेन प्रणीतेषु मूलभूतेषु न्यायशास्त्रेषु म० म० गङ्गेशोपाध्यायेन विभक्तेषु रघुनाथशिरोमणि-जगदीश-मथुरानाथप्रभृतिभिस्तार्किकशिरोमणिभिर्विस्तृतेष्वपि तेषु झटिति बालानां प्रवेशाय कोऽपि ग्रन्थो नेत्यालोच्य परमदयाशीलेन म० म० अन्नम्भट्टेन तर्कसंग्रहनामा ग्रन्थो व्यराचि । एष च ग्रन्थो न्यायवैशेषिकपदार्थसंवलितो बालानामतीवोपयुक्तोऽस्ति, अस्य च व्याख्यानभूता न्यायबोधिनीनाम्नी टीका कीदृशी ग्रन्थयोजनां सम्पादयतीति जानन्त्येव तद्विदः । अस्याश्च पदकृत्यटीकाप्युक्तटीकां सम्यग्योजयति । अथाप्येष महान् हर्षविषयो यदिह परीक्षार्थिनां विद्यार्थिनामुपकाराय विषमस्थलटिप्पणी निर्मिताऽस्ति । एषा च छात्राणां परीक्षायां कीदृशीमुपकृतिं विधास्यतीति प्रशंसनवाक्यमवलोकनोत्तरं तथ्यमतथ्यं वा भविष्यतीत्यलम्पल्लवितेनेति शम् ।

—श्रीकनकलालठक्कुरस्य
मैथिलस्य ।

# विषयानुक्रमणिका ।

इति ।



श्रीः ।

# तर्कसंग्रहः ।

न्यायबोधिनी–पदकृत्यव्याख्योपेतः ।

---

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥**

न्यायबोधिनी ।

अखिलागमसंचारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

---

१ **निधायेति** । ननु विघ्नोपशमनार्थं समाप्त्यर्थञ्च ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मंगलस्य कर्तव्यत्वादिहाऽपि ग्रन्थादौ मंगलस्योक्तप्रयोजनसम्पत्त्यर्थमेव विधानमित्यभिधानसंगतम् । कृतेऽपि मंगलबाहुल्ये कादम्बर्यादौ विघ्नशान्तिसमाप्त्योरदर्शनात् अकृतेऽपि तस्मिन् किरणावल्यादावुभयोर्दर्शनाच्चेति चेन्न । अविगीतशिष्टाचारविषयत्वेन मंगलस्य साफल्येन तत्र फलजिज्ञासायां विघ्नध्वंसस्यैव तत्फलत्वात् समाप्तेश्च विघ्नध्वंसद्वारा सिद्धत्वाच्च । नचाऽथाप्युक्तग्रन्थद्वये व्यभिचारस्य तादवस्थ्यमेवेति वाच्यम् । कादम्बर्यादौ मंगलापेक्षया विघ्नस्याऽऽधिक्यात् किरणावल्यादौ चानेकजन्मसञ्चितमंगलसत्त्वेन समाप्तिदर्शनाच्च । न च मंगलस्य कर्तव्यत्वे किम्प्रमाणमिति वाच्यम् ? 'समाप्तिकामो मंगलमाचरेदि' ति शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात् । तथा हि मंगलं सफलं वेदबोधितकर्तव्यताकम्, अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् । अत्रालौकिकेत्युक्तिर्भोजनादौ व्यभिचारवारणाय । अविगीतशिष्टपदोक्तिश्च रात्रिश्राद्धादौ व्यभिचारवारणाय । "न कुर्यान्निष्फलं कर्मे" ति शिष्टोक्त्या जलताडनादेरपि निषिद्धत्वादिति भावः ।

२ **अखिलागमेति** । अखिलाश्च ते आगमाश्चेत्यखिलागमास्तेषु सञ्चरितुं शीलमस्येति अखिलागमसञ्चारि । वाच्यत्वसंसर्गेणाऽऽगमेषु वर्तमानत्वं ह्यागमसञ्चारित्वम् ।

३ **श्रीकृष्णाख्यमिति** । श्रीकृष्ण इत्याख्या संज्ञा यस्य तच्छ्रीकृष्णाख्यं श्रीकृष्णसंज्ञकमित्यर्थः ।

४ **न्यायबोधिनीमिति** । न्यायान् न्यायशास्त्रस्थपदार्थान् बोधयितुं शीलमस्या व्याख्यायाः सा तथोक्ता तान्तथोक्ताम् ।

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—निधायेति ॥ १ ॥

## पदकृत्यम् ।

श्रीगणेशं नमस्कृत्य पार्वतीशंकरं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥
यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं वक्तव्यं विदुषा सदा ॥ २ ॥

विश्वेशं जगत्कर्त्तारं श्रीसाम्बमूर्त्तिं हृदि मनसि निधाय नितरां धारयित्वा गुरुवन्दनं च विधाय कृत्वेत्यर्थः । बालेति । अत्राधीतव्याकरणकाव्यकोशानधीतन्यायशास्त्रो बालः । व्यासादावतिव्याप्तिवारणायानधीतन्यायेति । स्तनन्धयेऽतिप्रसक्तिवारणायाऽधीतव्याकरणेति । सुखेति । सुखेनाऽनायासेन बोधाय पदार्थतत्त्वज्ञानायेत्यर्थः । तर्क्यन्ते प्रमितिविषयीक्रियन्त इति तर्का द्रव्यादिपदार्थास्तेषां संग्रहः संक्षेपेणोद्देश-लक्षण-परीक्षा यस्मिन् स ग्रन्थः । नाममात्रेण वस्तुसंकीर्त्तनमुद्देशः । यथा द्रव्यं गुण इति । असाधारणधर्मो लक्षणम् । यथा गन्धवत्त्वं पृथिव्याः । लक्षितस्य लक्षणं सम्भवति न वेति विचारः परीक्षा । अत्रोद्देशस्य पक्षज्ञानं फलं लक्षणस्येतरभेदज्ञानं परीक्षाया लक्षणे दोषपरिहार इति मन्तव्यम् ॥

---

१ चिकीर्षितस्येति । कर्तुमिष्टश्चिकीर्षितस्तस्य कर्तृवृत्तिव्यापारेच्छाविषयीभूतस्य ग्रन्थस्येत्यर्थः ।

२ निर्विघ्नेति । विघ्नान्निष्क्रान्तं निर्विघ्नं निर्विघ्नं परिसमाप्तिर्निर्विघ्नपरिसमाप्तिः सोऽर्थः प्रयोजनं यस्य तत् निर्विघ्नपरिसमाप्त्यर्थम् । इष्टदेवताया नमस्कार आत्मा स्वरूपं यस्य तदिष्टदेवतानमस्कारात्मकम् । इष्टदेवताप्रणामरूपमित्यर्थः ।

३ निबध्नातीति । ग्रन्थकोटिप्रवेशानुकूलव्यापारो हि निबध्नातेरर्थः ।

४ व्याकरण-काव्य-कोशविषयकसम्यग्ज्ञानवत्त्वे सति न्यायशास्त्रविषयकज्ञानशून्यत्वं बालत्वमिति लक्षणं पर्यवसितम् ।

५ असाधारणधर्म इति । धर्मेऽसाधारणत्वम्—असाधारणधर्मत्वं वा, अन्यूनाऽनतिरिक्तवृत्तित्वरूपम्बोध्यम् ॥

पदार्थाः कति, कानि च तेषां नामानि—

**द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्थाः ॥**

(न्या०) अथ पदार्थान्विभजते—द्रव्येति । तत्र सप्तग्रहणं पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय । ननु शक्तिपदार्थस्याऽष्टमस्य सत्त्वात्कथं सप्तैवेति । तथा हि वह्निसंयुक्तेन्धनादौ सत्यपि मणिसंयोगे दाहो न जायते । तच्छून्येन तु जायते । अतो मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति कल्प्यते । तस्माच्छक्तिरतिरिक्तः पदार्थ इति

---

१ ननु—

विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम् ।
विनाऽनुबन्धं ग्रन्थादौ मंगलं नैव शस्यते ॥'

इत्यभियुक्तोक्त्या ग्रन्थादावनुबन्धचतुष्टयप्रदर्शनस्यावश्यकत्वात्तद्दर्शयति—**द्रव्यगुणेत्यादिना** । तथा च द्रव्यादिसप्तपदार्था विषयाः । तज्ज्ञानं प्रयोजनम् । तज्जिज्ञासुरधिकारी । प्रतिपाद्यप्रतिपादकभावः सम्बन्धः स चाऽनेकधा विषय-ग्रन्थयोः प्रतिपाद्यप्रतिपादकभावरूपः । ग्रन्थाऽधिकारिणोश्च ज्ञातृ-ज्ञेयभावस्वरूपः । अत्र ह्यनुबन्धत्वं नाम ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयत्वम् ।

२ **सप्त पदार्था इति** । ननु पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेव सप्तत्वस्य लब्धौ सप्तग्रहणं व्यर्थमिति चेन्न । तस्याऽधिकसंख्यानिषेधसिद्धिफलकत्वेन सार्थक्यात् । पदार्थसामान्यलक्षणञ्च, पदस्याऽर्थः पदार्थ इति व्युत्पत्त्या अभिधेयत्वरूपम्बोध्यम् ॥

३ **विभजत इति** । स्वसमभिव्याहृतपदार्थतावच्छेदकमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलव्यापारो हि विभजतेरर्थः । स्वं विभजतिस्तत्समभिव्याहृतपदं पदार्थपदं तदर्थतावच्छेदकामिथोविरुद्धयावद्धर्मो द्रव्यत्वादिस्तत्प्रकारकज्ञानं द्रव्यगुणकर्मेत्याकारकं तदनुकूलव्यापारो हि द्रव्यगुणकर्मेति शब्दप्रयोगरूप इति समन्वयः ॥

४ **द्रव्यादिसप्तान्यतमत्वञ्च** । द्रव्यादिसप्तपदार्थभेदकूटविशिष्टभिन्नत्वम्बोध्यम् । द्रव्यादिभेदानां प्रत्येकप्रसिद्धानां सप्तानां कुत्राऽप्यसद्भावात्तादृशभेदसप्तकत्वावच्छिन्नाऽभावस्य सर्वत्र सद्भावान्न दोष इति भावः ॥

चेत् न । मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानाऽसमवधानाभ्यामनन्तशक्ति-तद्ध्वंस-तत्प्रागभाव-कल्पनाया अन्याय्यत्वात् । तस्मात्सप्तैवेति सिद्धम् ॥

कति द्रव्याणि, कानि च तानि—

**तत्र द्रव्याणि-पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ॥**

( न्या० ) द्रव्याणि विभजते—पृथिवीति । नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति । तथा हि—नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम् ? आकाशादिपञ्चकस्य वायोश्च नीलरूपत्वान्न तेष्वन्तर्भावः तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः । जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः । तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेत् न । तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाभावात् । न च विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति वाच्यम् ? तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात् । तस्मादुष्णस्पर्शगुणाश्रयतया

---

१ मणेः प्रतिबन्धकत्वेनेति । न केवलं चन्द्रकान्तमणेरेव प्रतिबन्धकत्वमपि तु सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमणेः प्रतिबन्धकत्वमित्यर्थः । कार्याऽकार्याऽनुकूलधर्माऽन्यतरविघटकत्वमेवाऽत्र प्रतिबन्धकत्वमित्यर्थः ।

२ मण्यभावस्येति । सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमण्यभावस्येत्यर्थः ।

३ द्रव्याणि विभजत इति । अत्रापि विभजतेः पूर्वोक्त एवार्थो बोध्यः।

४ तथा हीति । तदुक्तम्—

'तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति' ॥ इति ॥

५ न च विनिगमनाविरहादिति । एकत्र पक्षपातिनी युक्तिर्विनिगमना तस्या विरहादभावादित्यर्थः ।

तेजसो द्रव्यत्वं सिद्धम् । तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव, दीपापसरणक्रियाया एव तत्र भानात् ।

(प०) तत्रेति । तत्र सप्तपदार्थमध्ये इत्यर्थः । द्रव्याणि नवैवेत्यन्वयः । एवं तत्रेति पदं चतुर्विंशतिर्गुणा इत्यादिनाऽप्यन्वेति । द्रव्यत्वजातिमत्त्वं गुणवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम् ॥

कति गुणाः, के च ते ?—

**रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-संस्काराश्चतुर्विं-शतिर्गुणाः[३] ॥**

---

१ आदिशब्दाच्चलनस्य ग्रहणम् ।

२ **द्रव्यत्वजातिमत्त्वमिति** । ननु प्रथमलक्षणे लक्षण-लक्ष्यतावच्छेदकयोरभिन्नत्वादुद्देश्यतावच्छेदक-विधेययोरैक्यान्न शाब्दबोधाऽनुमित्योरुपपत्तिरतो द्वितीयलक्षणादरः । अत्रापि उत्पत्तिकालावच्छिन्ने घटादावव्याप्तिरतस्तृतीयलक्षणादर इति भावः ।

३ **गुणा इति** । गुणत्वजातिसिद्धिर्यथा—द्रव्य-कर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असम्भवात् रूपत्वादेः सत्ताया वा न्यूनातिरिक्तदेशवृत्तित्वान्नाऽवच्छेदकत्वमतश्चतुर्विंशत्यनुगतमवच्छेदकं किञ्चिद्वाच्यं तदेव गुणत्वमिति गुणत्वजातिसिद्धिः । कर्मान्यत्वे सति द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं गुणत्वमिति सामान्यलक्षणम् । द्रव्यत्वजातिसिद्धिप्रकारश्चेत्थम्—समवायेन कार्यत्वावच्छिन्नं प्रति या तादात्म्येन कारणता सा किञ्चिद्धर्म्मावच्छिन्नेति स धर्म एव द्रव्यत्वजातिरिति । अनुमानप्रयोगश्चात्रत्यो यथा—समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्न—कार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वात् घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणतावदिति । अत्राऽनुमानप्रयोगे—कार्यत्वकुक्षौ यावत्कार्यप्रवेशे गौरवात् कार्यध्वंसेऽपि कार्यत्वस्य सत्त्वात् तत्र समवायेन कार्यताया अभावादतिप्रसक्तत्वेनाऽवच्छेदकत्वाऽसम्भवादिति कार्यदले संयोगपदं निवेशनीयम् । तथा चायमनुमानप्रयोगः—समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना कारणता किञ्चिद्धर्मावच्छिन्नेति कारणतावच्छेदक एव द्रव्यत्वजातिरिति । अथाऽपि विभुद्वयस्य संयोगवादिनाम्मते संयोगत्वावच्छिन्नकार्यताया अप्रसिद्धिः—विभूनामिव तत्संयोगस्याऽपि नित्यत्वेनाऽतिप्रसक्तिश्चेति कार्यदले विभागपदं निवेशनीयम् । तथा चाऽनुमानप्रयोगः—समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिता कारणता किञ्चिद्धर्म्मावच्छिन्नेति सर्वं समञ्जसम् ।

कियन्ति कर्माणि, कानि च तानि—

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि॥**

सामान्यं कतिविधम् ?—

**परमपरं चेति द्विविधं सामान्यम् ॥**

(प०) परमपरं चेति । परसामान्यमपरसामान्यमित्यर्थः । परत्वं चाधिकदेशवृत्तित्वम् । अपरत्वं न्यूनदेशवृत्तित्वम् ॥

कियन्तो विशेषाः ?—

**नित्यद्रव्यवृत्तयो विशेषास्[1]त्वनन्ता एव ।**

समवायः कतिविधः ?—

**समवायस्त्वेक[2] एव ।**

अभावः कतिविधः ?—

**अ[3]भावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥ इत्युद्देशग्रन्थः ॥**

पृथिव्याः किं लक्षणम्, कति च भेदाः ?—

**तत्र गन्धवती पृथिवी । सा द्विविधा । नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात । शरीरमस्मदादीनाम् । इन्द्रियं ग[4]न्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥**

---

१ **विशेषास्त्विति** । अत्र विशेषत्वं स्वतो व्यावर्तकत्वं निरवयवद्रव्यव्यावृत्त्यर्थश्च तत्स्वीकरणम् ।

२ **समवायस्त्विति** । समवायत्वञ्च नित्यसम्बन्धत्वम् ।

३ **अभाव इति** । प्रतियोगिज्ञानाधीनज्ञानविषयत्वञ्चाऽभावत्वम् । समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वमेव भावत्वम् ।

४ **गन्धग्राहकमिति** । गन्धविषयकसाक्षात्कारजनकम् ।

(न्या०) गन्धवतीति। गन्धवत्त्वं पृथिव्या लक्षणम्। लक्ष्या पृथिवी। पृथिवीत्वं लक्ष्यतावच्छेदकम्। यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः। तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना। गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम्॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम्॥

(प०) तदेव हि लक्षणं यदव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयशून्यम्। यथा गोः सास्नादिमत्त्वम्। अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम्। अत एव गोर्न कपिलत्वं लक्षणं तस्याव्याप्तिग्रस्तत्वात्। अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्। अत एव गोर्न शृङ्गित्वं लक्षणं तस्यातिव्याप्तिग्रस्तत्वात्। असम्भवश्च लक्ष्यमात्रावृत्तित्वम्। यथा गोरेकशफवत्त्वं न लक्षणं तस्यासम्भवग्रस्तत्वात्। नित्येति। ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम्। ध्वंसेऽतिव्याप्तिवारणाय ध्वंसभिन्नेति विशेषणम्। घटादावतिव्याप्तिवारणाय विशेष्यदलम्। ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वाऽनित्यत्वम्। यद्भोगायतनं तदेव शरीरं चेष्टाश्रयो वा। इन्द्रियमिति। चक्षुरादाव-

---

१ गन्धवत्त्वमिति। गन्धवती पृथिवीत्यत्र गन्धवत्त्व-पृथिवीत्वयोर्द्वयोरप्यैक्ये-नोद्देश्यविधेययोरनिर्णयादाह गन्धवत्त्वं पृथिव्या लक्षणमिति। अत्राधिकरणार्थकमतुबन्तत्वप्रत्ययविधानाद्गन्धवत्त्वमित्यस्य गन्धाधिकरणत्वमर्थः। तच्च समवायेन बोध्यम्। समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वमिति निष्कर्षः।

२ उत्पत्तिकालावच्छेदेन घटादावव्याप्तेराह—गन्धेति।

३ व्याप्यत्वमिति। व्याप्यत्वं न्यूनदेशवृत्तित्वं द्रव्यत्वाभावसामानाधिकरण्ये सति द्रव्यत्वाभाववदवृत्तित्वरूपं, तेन द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वेऽपि न क्षतिः। अव्यापकत्वं वा निवेश्यम्, तस्य गुणत्वादिसाधारण्येऽपि तत्र गन्धसमानाधिकरणत्वाभावान्नातिव्याप्तिः।

४ ननु न्यायनये ध्वंसे ध्वंसप्रतियोगित्वाऽभावात्तस्यानित्यत्वं न स्यादत आह—प्रागभावप्रतियोगित्वमिति। तत्रापि प्रागभावप्रतियोगित्वाभावादनित्यत्वं न स्यादतो ध्वंसप्रागभावान्यतरप्रतियोगित्वमनित्यत्वमित्यवसेयम्।

५ यद्भोगायतनमिति। भोगायतनमित्यस्याऽऽत्मनो भोगस्थानमित्यर्थः। शरीरमित्यस्य सुखदुःखान्यतरसाक्षात्कारावच्छेदकमित्यर्थः। ननु देश-कालयोरपि सुखादिसाक्षात्कारावच्छेदकत्वेन तत्रापि शरीरत्वव्यवहारः स्यादत आह—चेष्टाश्रयो

तिव्याप्तिवारणाय गन्धग्राहकमिति । कालादावतिप्रसक्तिवारणायेन्द्रियमिति । विषय इति । शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः। शरीरादावतिव्याप्तिनिरासाय सत्यन्तम् । परमाण्वादावतिव्याप्तिवारणाय विशेष्यदलम् । कालादिवारणाय जन्यत्वे सतीत्यपि बोध्यम् ॥

जलस्य किं लक्षणम्, कति च भेदाः—

**शीतस्पर्शवत्य आपः । ता द्विविधाः । नित्याः अनित्याश्च । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥**

( प० ) शीतेति । तेज आदावतिव्याप्तिवारणाय-शीतेति। आकाशवारणाय स्पर्शेति । [2]कालादावतिप्रसक्तिवारणाय समवायसम्बन्धेनेति पदं देयम्। इन्द्रियमिति । त्वगादावतिव्याप्तिवारणाय रसग्राहकमिति । [3]रसनेन्द्रियरससंनिकर्षादावतिव्याप्तिनिरासायेन्द्रियमिति । सरिदिति । आदिना [4]तडागहिमकरकादीनां संग्रहः ।

तेजसः किं लक्षणम् ? के च भेदाः—

**[5]उष्णस्पर्शवत्तेजः । तच्च द्विविधम् । नित्यम-**

---

वेति । ननु हिताऽहितपरिहारार्थक्रियाविशेषस्यैव चेष्टाशब्दार्थत्वेन तस्याश्च शरीरैकदेशे हस्तपादादावपि सत्त्वेन तत्रापि शरीरत्वातिप्रसक्त्या तल्लक्षणऽस्यावयवित्वे सतीत्यस्यापि विशेषणत्वेन अन्त्यावयवित्वे सति चेष्टाश्रयत्वं हि शरीरलक्षणं फलितम् । अन्त्यावयवित्वार्थस्तु-द्रव्यान्तरानारम्भकद्रव्यत्वरूपो बोध्यः ।

१ शीतेति । शीतस्पर्शवत्त्वं ह्यपां लक्षणम् ।

२ कालादाविति । अत्रादिपदेन दिक्परिग्रहः ।

३ रसनेन्द्रियस्य रसेन साकं यः सन्निकर्षः संयुक्तसमवायस्तद्वारणायेत्यर्थः । अत्रादिपदेन दिक्कालयोर्ग्रहणम् ।

४ अत्रादिपदेन वर्षाबिन्दुग्रहणम् ।

५ उष्णस्पर्शवत्त्वं च तेजस्त्वम् ।



नित्यं च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात्। शरीरमादित्य-लोके प्रसिद्धम्। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति। विषयश्चतुर्विधो भौमदिव्योदर्याकरजभेदात्। भौमं वह्न्यादिकम् अबिन्धनम्। दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं सुवर्णादि॥

(५०) उष्णेति। जलादावतिव्याप्तिनिरासायोष्णेति। कालादावतिप्रसङ्गवारणाय समवायसम्बन्धेनेति पदं देयम्। इन्द्रियमिति। घ्राणादावतिव्याप्तिवारणाय रूपग्राहकमिति। कालादावतिव्याप्तिनिरसनायेन्द्रियमिति। भेदादिति पदं प्रत्येकमभिसम्बध्यते। भौममिति। आदिपदेन खद्योतगततेजःप्रभृतेः परिग्रहः। विद्युदादीति। आदिना अर्कचन्द्रादीनां परिग्रहः। भुक्तेति। भुक्तस्यान्नादेः पीतस्य जलस्य परिणामो जीर्णता तस्य हेतुरुदर्यमित्यर्थः। सुवर्णेति। आदिना रजतादिपरिग्रहः।

१ अद्भिरिन्ध्यते प्रकाश्यते इत्यबिन्धनम्।

२ जन्यवस्तुमात्रं प्रति कालादीनां हेतुत्वात् तत्र रूपादिग्राहकत्वस्यापि सत्वादतिप्रसक्तामतिव्याप्तिम्परिहर्तुं ह्यत्रेन्द्रियपदोपादानम्।

३ प्रत्येकमिति। द्वन्द्वान्ते द्वन्द्वमध्ये द्वन्द्वादौ वा श्रूयमाणपदं प्रत्येकमभिसम्बध्यत इति नियमादत्र द्वन्द्वान्ते श्रूयमाणभेदपदस्य प्रत्येकमभिसम्बन्ध इति भावः।

४ खद्योतगतेति। अत्रत्यप्रभृतिपदं प्रकाशयुक्तौषधिपरिग्राहकम्।

५ रविचन्द्रादीति। अत्रादिना तारागणपरिग्रहः।

६ रजतादेरिति। अत्रादिना सर्वस्य शेषलोहपदवाच्यस्य ग्रहणम्। तदुक्तममरकोशे— "सर्वञ्च तैजसं लौहमिति"।

स्मृतिरप्यत्र प्रमाणं तथा हि—

'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
सीसं कालायसञ्चैवमष्टौ लौहानि चक्षते'॥ इति॥

रीतिः पित्तलम्। त्रपु रंगमिति तदर्थः।



वायोः किं लक्षणम् ? के च ते भेदाः—

**रूपरहितः स्पर्शवान्वायुः । स द्विविधः । नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसंज्ञां लभते ।**

( न्या० ) एवं पृथिव्यादित्रिकं निरूप्य वायुं [1]निरूपयति— रूपरहित इति । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । [2]सति सप्तम्या विशिष्टार्थकतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् । विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः । तद्वारणाय विशेषणोपादानम् । तावन्मात्रोपादाने आकाशादावतिव्याप्तिः । तद्वारणाय विशेष्योपादानम् । अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा—गोः शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेत गवि अव्याप्तिस्तत्र नीलरूपाभावात् । असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम् । यथा गोरेकशफवत्त्वम् । गोसामान्यस्य द्विशफवत्त्वेन एकसफवत्त्वस्य कुत्राप्यसत्त्वात् । अतिव्याप्त्यव्या-

१ लक्षण-स्वरूप-प्रामाण्याद्यन्यतमप्रकारकज्ञानानुकूलव्यापारो हि निरूपयतेरर्थः । तथा चायं वाक्यार्थो निष्पद्यते—वायुनिष्ठा या विषयता तादृशविषयतानिरूपिका या लक्षण-स्वरूप-प्रामाण्याद्यन्यतमप्रकारिकाऽप्रतिपत्तिः तादृशप्रतिपत्त्यनुकूलो यो व्यापारस्तादृशव्यापारानुकूला या कृतिस्तादृशकृतिमान् ग्रन्थकार इति ।

२ सति सप्तम्या बोधितं वैशिष्ट्यं सर्वत्र सामानाधिकरण्येन बोध्यम् ।

प्त्यसम्भवानां निष्कृष्टलक्षणानि—लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । अव्याप्तिस्तु लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । असम्भवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ।

(ए०) रूपेति । घटादिवारणाय विशेषणम् । आकाशादिवारणाय विशेष्यम् । इन्द्रियमिति । चक्षुरादिवारणाय स्पर्शग्राहकमिति । कालादावतिव्याप्तिवारणायेन्द्रियमिति । वृक्षात । आदिपदेन जलादिपरिग्रहः । शरीरान्तरिति । महावाय्वादावतिव्याप्तिवारणाय विशेषणम् । मन आदिवारणाय विशेष्यम् । धनञ्जयवारणाय संचारीति । उपाधीति । मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः, जलादेरधोनयनादपानः, भुक्तपरिणामाय जाठरानलस्य समुन्नयनात्समानः, अन्नादेरूर्ध्वनयनादुदानः, नाडीमुखेषु विततनाद्व्यानः, इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः ॥

आकाशस्य किं लक्षणम् ?—

## शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥

१ यथाऽतिव्याप्ते गोः शृङ्गित्वरूपलक्षणे लक्ष्यतावच्छेदकगोत्वसामानाधिकरण्यं गोत्वावच्छेदकावच्छिन्नप्रतियोगिताको यो महिष्यादौ भेदस्तत्सामानाधिकरण्यमप्यस्तीति लक्षणसमन्वयो जातोऽतिव्याप्तेरिति बोध्यम् ।

२ अव्याप्तिलक्षणसमन्वयप्रकारा यथा—गोर्नीलरूपवत्वलक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरण-श्वेतगोनिष्ठाऽत्यन्ताभावप्रतियोगित्वस्य सत्त्वादव्याप्तिरिति ।

३ असम्भवलक्षणसमन्वयश्चेत्थम—यथा गोरेकशफवत्त्वरूपलक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसत्त्वादसम्भवः ।

४ **मन आदिवारणायेति** । अत्रत्यादिपदेन नाडीपुञ्जग्रहणम् ।

५ **धनञ्जयेति** । धनञ्जयस्य सर्वशरीरव्याप्यत्वेन सञ्चरणान्नास्तीति भावः ।

६ **शब्दगुणकमिति** । शब्दस्यात्र भट्टनये द्रव्यत्वात्तन्निरासाय गुणपदोक्तिः । अन्यथाऽऽकाशस्य शब्दवत्त्वमात्रलक्षणस्यैव युक्तत्वेन गुणपदोक्तेर्वैयर्थ्यापत्तेरिति भावः । अत्रायं विचारः—आकाशं द्रव्यमित्यत्र किम्मानमिति चेन्न । तत्र शब्दगुणकत्वस्यैव मानत्वात् । तथा हि—शब्दो गुणः अनित्यत्वे सति एकेन्द्रियग्राह्यजातीयत्वाद्रूपवदित्यनुमानेन शब्दस्य गुणत्वसिद्धौ शब्दोऽष्टद्रव्यानाश्रितः श्रोत्रेन्द्रियग्राह्यत्वात् शब्दत्ववदित्यनुमित्या शब्दस्याष्टद्रव्यगुणत्वाभावे च सिद्धे, शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति गुणत्वादिति परिशेषाऽनुमानादाकाशरूपसिद्धेरिति भावः ।

(न्या०) आकाशं लक्षयति–शब्दगुणकमिति । गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् । तच्चैकमिति । अनेकत्वे मानाभावादिति भावः । विभ्विति । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियावत्त्वम् । पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि । पृथिव्यप्तेजोवाय्वाकाशेति पञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥

(प०) शब्देति । शब्दो गुणो यस्य तत्तथा । असम्भववारणाय शब्दगुणोभयम् । विभ्विति । सर्वमूर्त्तद्रव्यसंयोगि ।

कालस्य किं लक्षणम्? के च भेदाः–

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

(न्या०) कालं लक्षयति–अतीतेति । व्यवहारहेतुत्वस्य लक्षणत्वे घट इति व्यवहारहेतुभूतघटादावतिव्याप्तिः । तद्वारणाय अतीतादीति विशेषणोपादानम् ॥

---

१ असाधारणधर्मानुकूलव्यापारो हि लक्षयतेरर्थः ।

२ अत्र के ते विशेषगुणा इति जिज्ञासोदये समाधत्ते–

'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥'

इति वैशेषिका विशेषाः । विशेषगुणत्वञ्च भावनाऽन्यो यो वायुवृत्ति-स्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्व-जलद्रवत्वान्यगुणत्वरूपम् । अत्र गुणत्वमित्युक्तिर्जात्यादावतिव्याप्तिवारणार्थिका । गुरुत्वेत्याद्युक्तिस्तु गुरुत्व-नैमित्तिकद्रवत्वयोर्व्यावृत्तये बोध्या । सांसिद्धिकद्रवत्वपरिग्रहाय जलपदोपादानम् । संयोगादिव्यावृत्तये सत्यन्तपदोपादानम् । संस्कारत्वधर्ममादाय भावनायामव्याप्तिवारणार्थमाद्यमध्यान्तं सत्यन्तघटकसमवायिविशेषणम् । सत्तादिकमादायाऽसम्भववारणाय स्पर्शसंग्रहाय च स्पर्शावृत्तीति ॥

३ परिच्छिन्नपरिमाणवत्त्वस्य क्रियावत्त्वस्य वा मूर्तत्वे गुणेषु तदभावादत्रत्यद्रव्यपदस्य स्पष्टार्थत्वं निरर्थकत्वं वा बोध्यम् ।

४ विभुत्वे सत्यतीतादिव्यवहाराऽसाधारणनिमित्तहेतुत्वं कालत्वमिति कालस्य लक्षणम् ।

५ अभिधानरूपस्फुरणरूपश्चेति व्यवहारस्य द्वैविध्यादभिधानरूपव्यवहाराभिप्रायेण घटपदोक्तिः ।

(प०) अतीतेति। अतीत[1] इत्यादिर्यो व्यवहारोऽतीतो भविष्यन्वर्तमान इत्यात्मकस्तस्यासाधारणहेतुः काल इत्यर्थः। नन्विदं लक्षणमाकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वादिति चेत्, न। अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात्। न चैवं कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम्, विभुत्वस्यापि निवेशात्।

दिशो लक्षणं भेदश्च—

**प्राच्यादिव्यवहारहेतुर्दिक्[2]। सा चैका नित्या विभ्वी च॥**

(न्या०) दिशो लक्षणमाह—प्राच्येति। उदयाचलसंनिहिता या दिक् सा प्राची। अस्ताचलसंनिहिता या दिक् सा प्रतीची मेरोः संनिहिता या दिक् सोदीची। मेरोर्व्यवहिता या दिक् साऽवाची॥

(प०) प्राचीति। इयं प्राचीयमवाचीयं प्रतीचीयमुदीचीत्यादिव्यवहारासाधारणं कारणं दिगित्यर्थः। हेतुर्दिगित्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात्तद्वारणाय प्राच्यादिव्यवहारहेतुरिति। आकाशादिवारणायासाधारणेत्यपि बोध्यम्॥

आत्मनो लक्षणं भेदश्च—

**ज्ञाना[3]धिकरणमात्मा। स द्विविधः। जीवात्मा[4] परमात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा[5] एक एव। जीवस्तु प्रतिशरीरं भिन्नो[6]ऽविभुर्नित्यश्च॥**

---

१ अतीतत्वं नाम वर्तमानध्वंसप्रतियोगित्वम् भविष्यत्वञ्च वर्तमानप्रागभावप्रतियोगित्वरूपम्बोध्यम्। वर्तमानोपाधिसम्बन्धत्वं हि वर्तमानत्वम्।

२ प्राच्यादिव्यवहाराऽसाधारणनिमित्तकारणत्वं दिक्त्वम्।

३ समवायेन ज्ञानाधिकरणत्वमात्मत्वमित्यात्मनो लक्षणम्। परमेतल्लक्षणमव्याप्तमुक्तदशायां ज्ञानोत्पादकात्म-मनःसंयोगाऽभावेन ज्ञानाधिकरणत्वाऽभावादतो ज्ञानसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वमिति लक्षणं पर्य्यवसन्नम्।

४ आत्मनि जीवत्वं नाम, समवायेन जन्यज्ञानाधिकरणत्वम्।

५ आत्मनि परमत्वञ्च, जगज्जननादिकर्तृत्वम्।

६ सुखादिभोगवैचित्र्यात्प्रतिशरीरं जीवभेदोऽनुमीयत इति भावः।



(न्या०) आत्मानं निरूपयति[1]—ज्ञानाधिकरणमिति। अधिकरणपदं समवायेन[2] ज्ञानाश्रयत्वलाभार्थम् ॥

(प०) ज्ञानाधिकरणेति। भूतलादिवारणाय ज्ञानेति। कालादिवारणाय समवायेनेत्यपि देयम्। ईश्वर इति। समवायसंबन्धेन नित्यज्ञानवानीश्वरः। जीव इति। सुखादिसमवायिकारणं जीव इत्यर्थः॥

मनसो लक्षणं भेदश्च—

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः[3]। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं[4] नित्यं च ॥**

(न्या०) मनो निरूपयति—सुखादीति। उपलब्धिर्नाम-साक्षात्कारः। तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम्। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः। अतः सुखादिसाक्षात्कारकारणत्वविशेषणम्। विशेष्यानुपादाने आत्मन्यतिव्याप्तिः। आत्मनः सुखादिकं प्रति समवायिकारणत्वात्। अत इन्द्रियत्वरूपविशेष्योपादानम् ॥

(प०) सुखेति। आत्ममनःसंयोगादिवारणायेन्द्रियमिति। चक्षुरादिवारणाय सुखेति ॥

१ अत्रापि लक्षण-स्वरूप-प्रामाण्याद्यन्यतमप्रकारकज्ञानानुकूलव्यापारो निरूपयतेरर्थः।

२ अत्र समवायेनेत्यस्यानुपादाने कालेऽपि कालिकसम्बन्धेन ज्ञानस्य सत्त्वादतिव्याप्तिः स्यात्तन्निरासाय तदुपादानमिति भावः॥

३ नीलकण्ठीव्याख्यातसम्मतं मनसो लक्षणं तु स्पर्शरहितत्वे सति क्रियावत्वरूपम्। इदञ्च लक्षणं मनःसंयोगाद्यतिव्याप्तिवारकेन्द्रियत्वपठितमूलोक्तलक्षणाऽपेक्षया-लघुत्वादादृतम्। अस्याऽन्यादृशलक्षणन्तु न्यायबोधिन्यां स्पष्टम्।

४ ननु मनसो मध्यमपरिमाणवत्वेऽनित्यत्वापत्तिः विभुत्वे च विभुद्वयसंयोगस्याऽनभ्युपगमादात्ममनःसंयोगरूपाऽसमवायिकारणस्याऽभावेन ज्ञानानुपपत्तेराह—**परमाणुरूपमिति।**

५ अत्रादिपदेन कालादिसाधारणकारणानां संग्रहः। कार्यमात्रे साधारणकारणानि तु—
'ईशस्तज्ज्ञानयत्नेच्छाः कालोऽदृष्टं दिगेव च।
प्रागभावप्रतिबन्धकाऽभावौ कार्ये साधारणाः स्मृताः॥' इति।

रूपस्य किं लक्षणम्? के च भेदाः—

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्रभेदात्सप्तविधम्। पृथिवी-जलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि॥**

(न्या०) रूपं लक्षयति—चक्षुरिति। चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम्। विशेष्यमात्रोपादाने रसादावतिव्याप्तिः। अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम्। तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः। यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्येति नियमात्तद्वारणाय विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्। अतस्तद्वारणाय मात्रपदं, संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति। अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति। अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम्। अग्राह्यत्वं नाम तदविषयत्वम्। तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वमिति फलितोऽर्थः। ननु प्रभा-घट-संयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न। गुणपदस्य विशेषगुणपरत्वात्। न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम्? जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदु-

१ न चात्र 'गुणे शुक्लादयः पुंसि' इत्यनुशासनविरोधः शंक्यः। तस्य विशेष्यासमभिव्याहारविषयकत्वादत्र च रूपमित्यस्यानुषङ्गात्।

२ येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यत इति नियमस्य प्रकृतोपयोग्यंशमात्रोपादानमिदम्।

३ फलित इति। चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वं रूपत्वमित्येवंविधोः फलिताऽर्थो बोध्यः।

पादानात् । अथवा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाचक्षुःसंयोगादावतिव्याप्तिः । संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् । घट-पटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् । अत्र[३] जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम् । एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः । अतो विशेषणविशेष्ययोरुपादानम् ॥

( प० ) चक्षुरिति । रूपत्वादिवारणाय गुणपदम् । रसादिवारणाय चक्षुर्ग्राह्य इति । संख्यादिवारणाय मात्रपदम् । यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव संख्यादिवारणं संभवतीति मात्रपदं व्यर्थं तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् । वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम् । व्यणुकादिवारणाय गुणपदं तु देयम् । सप्तेति । रूपमित्यनुषज्यते ॥

रसस्य लक्षणं तद्भेदश्चेति—

**रसनग्राह्यो[४] गुणो रसः । स च मधुरा-म्ल-लवण-कटु-कषाय-तिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः तत्र पृथिव्यां षड्विधः । जले मधुर एव ॥**

( प० ) रसनेति । रसत्वादिवारणाय[५] गुण इति । रूपादावतिव्याप्तिवारणाय रसनेति । तत्रेति । पृथिवी-जलयोरित्यर्थः । षड्विध इति । अत्र रस इत्यनुवर्तते ॥

१ अतीन्द्रिये परमाण्वादिरूपेऽव्याप्तिवारणायाऽऽह अथ वेत्यादि ।

२ अत्रत्येनापिशब्देन तदभावस्य ग्रहणम् ।

३ अत्रादिपदेन स्वर्णादेः परिग्रहः ।

४ रसनभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वं रसस्य लक्षणम् ।

५ रसत्वेऽतिव्याप्तिवारणायेत्यस्य रसनाग्राह्यगुणविभाजकोपाधिमत्त्वेऽतिव्याप्तिवारणायेत्यर्थः ।

गन्धस्य लक्षणं तद्भेदश्च—

**घ्राणग्राह्यो गुणो गन्धः। स द्विविधः। सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः॥**

(प०) घ्राणग्राह्य इति। गन्धत्वादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय घ्राणग्राह्य इति। पृथिवीति। पृथिवी संबन्धसत्त्वे गन्धप्रतीतिसत्त्वं पृथिवीसंबन्धाभावे गन्धप्रतीत्यभाव इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव जले प्रतीतिर्बोध्या। एवं वायावपि। ननु देशान्तरस्थकस्तूरीकुसुमसंबद्धपवनस्यैतद्देशे तत्संबन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः। न च वाय्वानीतव्यणुकादिसंबन्धोऽस्त्येवेति वाच्यम्, कस्तूर्यां न्यूनतापत्तेः, कुसुमस्य च सच्छिद्रत्वापत्तेरिति चेन्न। भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तेः। कर्पूरादौ तु तदभावान्न तथात्वमिति॥

स्पर्शस्य किं लक्षणम्? के च भेदाः—

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः। शीतो-ष्णा-नुष्णाशीत-भेदात। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवी-वाय्वोः॥**

( न्या० ) स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति। अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय।

---

१ घ्राणभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणत्वं गन्धस्य लक्षणम्।

२ गन्धे सुरभित्वं नाम षट्पदाद्यभिलाषविषयत्वमेव।

३ दृष्टानुसारेणैवाऽदृष्टकल्पनम्भवतीति भावः। वस्तुतस्तु-उद्बुद्धानुद्बुद्धभेदाभ्यां गन्धस्य द्वैविध्यात्तत्र कुसुमादावुभयविधगन्धवत्त्वम्। अत एव यन्त्रद्वारा सारनिस्सृतनिश्शेषकुसुमे गन्धाभावस्याप्युपलब्धिः। तथा च रजतापहारिसलिलसम्पर्काद्रजतपर्णो परिभागस्थसूक्ष्मावयवाऽपहरणवद्वेगशालिवायुनाऽपि कुसुमोपरिभागस्थसूक्ष्मावयवापकर्षान्न सच्छिद्रत्वादिदोषापत्तिर्नाप्यदृष्टादिक्लिष्टकल्पनेति भावः॥

४ त्वगितरेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे च सति गुणविभाजकोपाधिमत्त्वं स्पर्शस्य लक्षणम्।

५ अत्रापि लक्षधातोरुक्त एवार्थो वेदितव्यः।

अन्यविशेषणकृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः ॥

( प० ) स्पर्शत्वादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय त्वगिन्द्रियेति। संख्यादिवारणाय मात्रपदम्। तत्रेति। पृथिव्यादिचतुष्टये । शीत इति शीतस्पर्शः । उष्ण इति उष्णस्पर्शः ॥

रूप-रस-गन्ध-स्पर्शाः कुत्र पाकजाः कुत्राऽपाकजा वेति—

**रूपादिचतुष्टयं पृथिव्यां पाक[1]जमनित्यं च। अ[2]न्यत्रापाकजं नित्यमनित्यं च । नित्य[3]गतं नित्यम् । अ[4]नित्यगतमनित्यम् ॥**

( न्या० ) रूपादिचतुष्टयमिति । एतत्तत्त्वनिर्णयश्चेत्थम् । पाको नाम विजातीयतेजःसंयोगः । स च नानाजातीयरूपजनको विजातीयस्तेजःसंयोगः । तदपेक्षया रसजनको विजातीयः। एवं गन्धजनकोऽपि ततो विजातीय एव । एवं स्पर्शजनकोऽपि तथैव । एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः । यथा तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः । पूर्वरसस्याम्लस्यैवानुभवात् । क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते । विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात् । तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः । एवं गन्धजनको विलक्षण एव । रूप-रसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि विजातीयपाकवशात्सुरभिगन्धोपलब्धेः । एवं स्पर्शजनकः

१ अत्र पाकजमित्यस्य पाकस्तेजःसंयोगस्तेन पूर्वरूपं नश्यति, रूपान्तरमुत्पद्यत इत्यर्थः ।

२ अन्यत्र अबादित्रये । अपाकजं रूपरसस्पर्शत्रयमग्निसंयोगानुत्पन्नमित्यर्थः ।

३ नित्यगतमित्यस्य परमाणुगतमित्यर्थः ।

४ अनित्यगतमित्यस्य कार्यगतमित्यर्थः ।

पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्। तस्माद्रूपादिजनका विजातीया एव पाकाः। अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते। तदुत्तरं तादृशरूपरसादय उत्पद्यन्ते। तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते। ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः। एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक्॥

संख्यायाः किं लक्षणम्? कुत्र च सा तिष्ठतीति—

**एकत्वादिव्यवहारहेतुः संख्या[1]। सा नवद्रव्यवृत्तिः। एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च[2]। नित्यगतं नित्यम्[3]। अनित्यगतमनित्यम्[4]। द्वित्वादिकं[5] तु सर्वत्रानित्यमेव[6]॥**

(प०) एकत्वादीति। एकत्वमित्यादिर्यो व्यवहारः। एको द्वावित्याद्यात्मकस्तस्य हेतुः संख्या इत्यर्थः। घटादिवारणाय एकत्वा-

---

१ एको द्वावित्याद्यात्मको य एकत्वादिव्यवहारस्तस्याऽसाधारणहेतुत्वं संख्यात्वमिति लक्षणम्।

२ नित्यानित्यादिभेदाभ्यामेकत्वस्यापि द्वैविध्यादाह—नित्यमनित्यञ्चेति।

३ नित्यगतमित्यस्य परमाणुगतमित्यर्थः। एकत्वनाशम्प्रत्याश्रयनाशस्य हेतुत्वेन परमाणुनाशाऽभावेन तद्गतैकत्वस्यापि नाशाऽभाव इति भावः।

४ अनित्यगतं कार्यगतम्। द्व्यणुकादीनां नाशात्तद्गतैकत्वस्यापि नाश इति भावः।

५ अत्र समवायिकारणगतैकत्वस्याऽसमवायिकारणत्वम्। अयमेकोऽयमेक इत्यपेक्षाबुद्धेर्निमित्तकारणत्वम्। अपेक्षाबुद्धिनाशस्य च व्यासज्यवृत्तिद्वित्वादिविनाशकत्वमवधेयम्।

६ सर्वत्रेत्यस्य नित्याऽनित्यद्रव्ययोरित्यर्थः। एवञ्चाऽपेक्षाबुद्धिजन्यत्वेन द्वित्वादेरनित्यत्वमेवेति बोध्यम्।

द्वीति । कालादिवारणायाऽसाधारणेत्यपि देयम् । ननु संख्याया अवधिरस्ति न वेत्यत आह—एकत्वादीति । तथा च—

"एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः ।
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥"

इति महदुक्तेः परार्धपर्यन्तैव संख्या—इति भावः ॥

परिमाणस्य किं लक्षणम् ? के च भेदाः—

**[1]मानव्यवहारासाधारणं कारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम् । अणु महद्दीर्घं ह्रस्वं चेति ॥**

(५०) मानेति । मानं परिमितिस्तस्या यो व्यवहारः, इदं महदिदमणु-इत्याद्यात्मकः तस्य कारणं परिमाणमित्यर्थः । दण्डादिवारणाय मानेति । कालादिवारणायासाधारणेति । शब्दत्ववारणाय कारणमिति । नवद्रव्येति । चतुर्विधमपि परमध्यभेदेन द्विविधम् । तत्र परमाणुह्रस्वत्वे परमाणुमनसोः । मध्यमाणुह्रस्वत्वे द्व्यणुके । परममहत्त्वदीर्घत्वे गगनादौ । मध्यममहत्त्वदीर्घत्वे घटादौ । एतन्मौक्तिकादिदं मौक्तिकमणिवति व्यवहारस्यापकृष्टमहत्त्वाश्रयत्वाद्गौणत्वं बोध्यम् । एवमेव केतनादूर्ध्वञ्जनं ह्रस्वमित्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ।

पृथक्त्वस्य किं लक्षणम् ?

**[2]पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

---

१ अत्र कारणपदानुपादाने मानव्यवहारासाधारणत्वमात्रलक्षणाङ्गीकारे मानव्यवहारेति शब्देऽपि शब्दत्वधर्मस्याप्यसाधारणत्वेन तत्र परिमाणत्वस्यातिप्रसक्त्या कारणपदोपादानम् ।

२ एकपृथक्त्व-द्विपृथक्त्वादिभेदैः पृथक्त्वस्यानेकविधत्वम् । तत्रैकपृथक्त्वं नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्विपृथक्त्वादिकं सर्वत्राऽनित्यमेव । अस्य चाश्रयद्वितीयक्षणे प्रादुर्भावः । आश्रयनाशान्नाशश्च । अयमत्र विचारः—भेदातिरिक्तं पृथक्त्वमस्ति न वा, अस्ति चेत्तत्र किम्मानमिति जिज्ञासायाम्-घटः पटो नेति विलक्षणप्रतीतेः घटः पटात्पृथगिति प्रतीतिरेव मानमित्युत्तरम् ।

(प०) पृथगिति । अयमस्मात्पृथगिति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः । दण्डादिवारणाय पृथगित्यादि । कालादिवारणाया-ऽसाधारणेति । पृथग्व्यवहारत्ववारणाय कारणमिति ॥

संयोगस्य लक्षणम्—

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥**

(प०) संयुक्तेति । इमौ संयुक्ताविति यो व्यवहारस्तस्य हेतुः संयोग इत्यर्थः । दण्डादिवारणाय संयुक्तव्यवहारेति । कालादिवार-णायासाधारणेत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिप्रसक्तिवारणाय हेतुरिति । उपदर्शितलक्षणचतुष्टयेऽसाधारणपदं देयम् । क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणायासाधारणेति दृश्यते तत्त्वाधुनिकैर्न्यस्तमिति बोध्यम् ॥

विभागस्य लक्षणम्—

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ।**

(न्या०) विभागं लक्षयति—संयोगेति । संयोगनाशकत्वविशिष्ट-गुणत्वं विभागस्य लक्षणम् । विशेषणमात्रोपादाने क्रियाया अपि संयो-गनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय गुणत्वमिति विशेष्योपादानम् ॥

(प०) संयोगेति । संयोगनाशजनक इत्यर्थः । कालेऽतिप्रसक्ति-वारणाय गुणपदम् । ईश्वरेच्छादिवारणायासाधारणेत्यपि बोध्यम् । ननु असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यादिति चेत् । न । क्रियायामतिप्रसक्तिवारणाय तस्यावश्यकत्वात् ।

---

१ इमौ संयुक्ताविति व्यवहारस्याऽसाधारणहेतुत्वं संयोगस्य लक्षणम् । अयं च संयोगः । अन्यतरकर्मज—उभयकर्मज—संयोगजभेदैस्त्रिविधः । तत्र पक्षि-गिरिसंयोगः प्रथमः । मेषद्वयसंयोगो द्वितीयः । कपाल-तन्तुसंयोगात्तन्तु-कुम्भसंयोगस्तृतीयः । अभिघा-तनोदनभेदाभ्यां कर्मजसंयोगस्यापि द्वैविध्यम् । तत्र शब्दहेतुराद्यः । शब्दाऽहेतुर्द्वितीयः ।

२ संयोगनाशकत्वे सति गुणत्वम्—विभक्तव्यवहाराऽसाधारणकारणत्वे सति गुणत्वं वा विभागस्य लक्षणम् । ननु विभागस्याद्यलक्षणे संयोगनाशकेत्युक्तावपि संयोगेऽतिव्याप्तिः स्यात् संयोगस्य प्रतियोगिविधया नाशम्प्रति हेतुत्वादिति चेन्न । प्रतियोगितासम्बन्धानवच्छिन्ननाशविशिष्टजन्यतानिरूपितजनकत्वविवक्षणेनादोषादिति केचित् । वस्तुतस्तु संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्नकारणत्वमित्येव निष्कृष्टलक्षणम्बोध्यम् ।

परत्वाऽपरत्वयोर्लक्षणं भेदश्चेति—

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते च द्विविधे । दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥**

(प०) परेति । परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वमित्यर्थः । दण्डादिवारणाय परव्यवहारेति । कालादिवारणायासाधारणेति । परव्यवहारत्ववारणाय कारणेति । एवमेव द्वितीयेऽपि बोध्यम् ॥

गुरुत्वस्य किं लक्षणमिति प्रश्ने उत्तरम्—

**आद्यपतनासमवायिकारणं गुरुत्वं पृथिवीजलवृत्ति ॥**

( न्या० ) गुरुत्वं लक्षयति–आद्येति । द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाऽऽद्येति । उत्तरत्र स्यन्दने आद्यविशेषणमपि पूर्ववदेव योजनीयम् ॥

(प०) आद्येति । दण्डादिवारणायासमवायीति । रूपादिवारणाय पतनेति । वेगेऽतिव्याप्तिवारणायाद्येति ॥

१ परत्वापरत्वयोः प्रत्येकं द्वैविध्यमाह–दिक्कृत इत्यादिना ।

२ परत्वलक्षणे परव्यवहारेत्यस्यानुपादाने असाधारणकारणत्वमात्रस्यैव लक्षणत्वे दण्डेऽपि दण्ड इत्यभिधानात्मकाऽसाधारणकारणत्वस्य सत्त्वात्तत्रातिव्याप्तिः स्यात्तन्निरासाय तदुपादानम् ।

३ लक्षणेऽसाधारणपदानुपादाने परव्यवहारे परव्यवहारत्वस्याप्यसाधारणधर्मत्वेनातिव्याप्तिः स्यादतस्तादिति भावः ।

४ पतने आद्यत्वं नाम स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इति भावः ।

५ आम्रपतनादिरूपक्रियायां बहुशो दण्डलोष्ठादीनां निमित्तकारणत्वात्तत्रातिव्याप्तिरित्यसमवायीत्युक्तिः ।

६ कपालादिगतरूपादेरपि घटादिगतरूपादेरप्यसमवायिकारणत्वेन तत्रातिव्याप्तिः स्यादतः पतनेतिपदोपादानम् ।

द्रवत्वस्य लक्षणं भेदस्तत्स्थानञ्च–

**आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकं च सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥**

(प०) आद्यस्यन्दनेति । दण्डादिवारणायासमवायीति । रसादिवारणाय स्यन्दनेति ॥

स्नेहस्य किं लक्षणं ? तच्च कुत्र तिष्ठतीति–

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥**

( न्या० ) स्नेहं लक्षयति–चूर्णादीति । चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणः संयोगः । तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य । तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः । अतः स्नेह एवासाधारणं कारणम् । विशेषणमात्रोपादाने कालादावति-

---

१ स्यन्दने आद्यत्वं च स्वसमानाधिकरणस्यन्दनप्रतियोगिकध्वंसासमानकालिकत्वम् । द्वितीयस्यन्दनादीनां प्राथमिकस्यन्दनध्वंससमानकालिकत्वात्तन्निरासः, स्यन्दनं स्रवणरूपाक्रियाविशेषस्तदसमवायिकारणमित्यर्थः ।

२ सांसिद्धिकत्वञ्च निमित्तानपेक्षाऽधोदेशप्रसरत्वम् ।

३ अत्रत्यमादिपदं लाक्षाग्राहकम् ।

४ अत्रादिपदेन पूर्वोक्तलोहपदवाच्यग्रहणम् ।

५ कुत्रचित्प्रतिरुद्धसलिलस्थले दण्डस्यापि स्यन्दने निमित्तकारणत्वात्तत्रातिव्याप्तिरतोऽसमवायिपदोपादानम् ।

६ अवयवगतरसत्वाद्यवच्छिन्नस्याऽवयविगतरसत्वाद्यवच्छिन्नम्प्रति हेतुत्वेन प्रसक्ताऽतिव्याप्तिवारणाय स्यन्दनपदोपादानम् ।

७ असाधारणमित्यस्य निमित्तकारणमित्यर्थः ।

व्याप्तिरतस्तद्वारणाय विशेष्योपादानम् । वस्तुतस्तु[1] द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

(प०) चूर्णादीति । चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिस्तस्य पिण्डीभावः संयोगविशेषस्तस्य हेतुर्निमित्तकारणं स्नेह इत्यर्थः । कालादावतिव्याप्तिवारणाय गुणपदम् । रूपादावतिव्याप्तिवारणाय पिण्डीभावेति । चूर्णपदं[2] स्पष्टार्थम् ॥

शब्दस्य किं लक्षणम् ? के च तद्भेदाः—

**[3]श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः । ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको [4]भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥**

(न्या०) शब्दं लक्षयति—श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय श्रोत्रेति । स[5] त्रिविधः संयोगजो विभागजः शब्दजश्चेति । यथा भेरीदण्डसंयोगजो झांकारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः । शब्दो-

१ वस्तुतस्त्विति ग्रन्थेन स्नेहस्य मूलोक्तलक्षणं व्याहतमतोऽगत्या स्नेहत्वजातिमत्त्वमेव स्नेहस्य लक्षणं वाच्यम् ।

२ लोहादिपिण्डीभावहेतुभूताग्निसंयोगे व्यभिचारनिवृत्तये चूर्णपदस्यावश्यकत्वात्तस्य स्पष्टार्थत्वाऽभिधानं चिन्त्यमिति भावः ।

३ श्रोत्रेतरेन्द्रियाग्राह्यत्वे सति श्रोत्रेन्द्रियग्राह्यत्वे च सति गुणत्वं शब्दस्य लक्षणम् ।

४ अत्रत्यमादिपदं वेणुवीणादिसंग्राहकम् ।

५ ध्वन्यात्मक-वर्णात्मकभेदेन द्विविधस्यापि शब्दस्य संयोगज-विभागज-शब्दजभेदेन त्रैविध्यं भवति । तत्र ध्वन्यात्मकशब्दस्य टीकाकृतैव त्रैविध्योपपादनान्नाभिहितम्मया किन्तु वर्णात्मकशब्दस्य त्रैविध्यमभिधीयते । तथाहि-वायुकण्ठसंयोगेन ओष्ठद्वयविभागेन वीचीतरंगन्यायेन च वर्णत्रैविध्यम्बोध्यम् । तत्राऽऽकाशस्य शब्दमात्रे समवायिकारणत्वम् । कण्ठाकाशसंयोगस्य ओष्ठाकाशविभागादेश्चाऽसमवायिकारणत्वम् ।

त्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते । तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ॥

( प० ) श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादिवारणाय श्रोत्रग्राह्य इति । वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्गुणपदमनुपादेयमेव ॥

बुद्धेः किं लक्षणम् ? कतिधा च सा—

**सर्वव्यवहारहेतुर्गुणो[1] बुद्धिर्ज्ञानम्[2] । सा द्विधा । स्मृतिरनुभवश्च ॥**

( न्या० ) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । व्यवहारः शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ।

( प० ) बुद्धिलक्षणमाह—सर्वेति । सर्वे ये व्यवहारा आहारविहारादयस्तेषां हेतुर्बुद्धिरित्यर्थः । दण्डादिवारणाय सर्वव्यवहारेति । कालादिवारणायासाधारणेत्यपि देयम् ।



स्मृतेः किं लक्षणम् ?

**[3]संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥**

१ सर्वव्यवहाराऽसाधारणहेतुत्वे सति गुणत्वं बुद्धित्वमिति बुद्धेर्लक्षणम्, लाघवेन लक्षणान्तरं दर्शयति—ज्ञानमिति । ज्ञानत्वजातिमत्त्वं बुद्धित्वमिति बुद्धेर्लक्षणम् । ज्ञानत्वं च जानामीत्यनुव्यवसायगम्यत्वम् । ज्ञानत्वस्य जानामीत्यनुव्यवसायगम्यत्वं तु प्रमाणसिद्धत्वसूचनाय । तथाहि घटं जानामीत्याद्यनुव्यवसायस्यानुगतधर्ममन्तराऽनुपपन्नत्वेन तस्याऽभ्युपगन्तव्यतया लाघवाज्जातित्वसिद्धिः, लाघवञ्च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतमिति त्रिविधम्बोध्यम्, प्रकृते च शरीरकृतमेव लाघवम् ।

२ केचित्तु बुद्धिर्ज्ञानमिति पर्यायोपादानं ज्ञानबुद्ध्युपलब्धिशब्दानामस्मिञ्छास्त्रे समानार्थकत्वं न सांख्यानामिव भिन्नार्थकत्वमिति ज्ञापयितुमिति वदन्ति ।

३ संस्कारमात्रजन्यत्वे सति ज्ञानत्वं स्मृतित्वमिति स्मृतेर्लक्षणम् । स्मृतित्वञ्च स्मरामीत्यनुभवसिद्धो जातिविशेषः ।

यथाश्रुतमूलार्थस्तु--यथा जलमिति । जलं इतरभेदाभाववत् इतरभेदाभावव्यापकगन्धाभाववच्च । इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः । न चेयं तथा । इयं पृथिवी तथा इतरभेदाभावव्यापकगन्धाभाववती न किन्तु तदभावात्मकगन्धवती । तस्मान्न तथेति । तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्ताद् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः । तथा इतरभेदाभाववती । न इत्यस्याभावः । तथा च इतरभेदाभावाभाववती इतरभेदवतीत्यर्थः ॥

( प० ) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय मात्रेति । न चेयं तथेति । इयं पृथिवी न तथा न गन्धाभाववतीत्यर्थः । तस्मान्न तथेति । गन्धाभाववत्त्वाभावादितरभेदाभाववती नेत्यर्थः । नन्वत्र किमिति नान्वयव्याप्तिरित्याशङ्क्य परिहरति—अत्रेति । इतरभेदसाधकानुमान इत्यर्थः । इदमुपलक्षणम् । जीवच्छरीरं सात्मकं[1] प्राणादिमत्त्वात् । यन्नैवम् तन्नैवम् । यथा घटः । प्रत्यक्षादिकं प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वात् । यन्नैवम् तन्नैवम् । यथा प्रत्यक्षाभासः । विवादास्पदम् आकाशमिति व्यवहर्तव्यं शब्दवत्त्वादित्यादिकमपि केवलव्यतिरेकीति द्रष्टव्यम् ॥

पक्षस्य किं लक्षणम् ?

विशेष विशेष

## सन्दिग्धसाध्यवान् पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ॥

( न्या० ) पक्षलक्षणमाह--सन्दिग्धेति । साध्यप्रकारक-[2]संदेहविशेष्यत्वं पक्षत्वम् । इदं च लक्षणमनुमितेः पूर्वं साध्यसन्देहे नियमेन जायत इत्यभिप्रायेण प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारिकाया गगनत्वावच्छिन्नोद्देश्य-

१ अत्रत्यमादिपदमिन्द्रियाणां ग्राहकम् ।

२ सन्देहश्च पर्वतो न वेत्याकारकः ।

तानिरूपितमेयत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं [1]पक्षत्वमिति स्थिरीकृतम् ॥

( प० ) अथ पृथिवीमात्रस्य पक्षत्वादित्यत्र किं नाम पक्षतेत्यपेक्षायां तां निर्वक्ति—सन्दिग्धेति । सपक्षवारणाय सन्दिग्धेति ॥

सपक्षलक्षणं किम् ?

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ।**

( न्या० ) सपक्षलक्षणमाह—निश्चितेति । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् निश्चयश्च महानसं वह्निमादित्याकारकः ।

( प० ) निश्चितेति । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रैवेति । धूमवत्त्वे हेतावेवेत्यर्थः ॥

विपक्षलक्षणं किम् ?

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ॥**

( न्या० ) विपक्षलक्षणमाह—निश्चितसाध्याभावेति । साध्याभावप्रकारनिश्चयविशेष्यत्वं विपक्षत्वम् निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः ।

( प० ) निश्चितेति । सपक्षेऽतिव्याप्तिवारणाय साध्येति । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रैव धूमवत्त्व एव ॥

अथात्र हेत्वाभासाः निरूप्यन्ते—

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ॥**

( न्या० ) एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—सव्यभिचारेति । हेतुवदाभासन्त इति हेत्वाभासाः । दुष्टहेतव इत्यर्थः । दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः । एतद्विशिष्टा

[1] प्राचीनोक्तलक्षणन्तु—सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वरूपमेव ।

हेतवो दुष्टहेतव इत्यर्थः । यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यस्य लक्षणम् । हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा । अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः । पर्वतो वह्निमान्, प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

(५०) हेतून्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—सव्यभिचारेति । अत्रेदं बोध्यम्—अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते तानि कानीति चेच्छ्रूयताम् । पक्षधर्मत्वं सपक्षसत्त्व-विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तम् । तस्य भावस्तत्त्वम् । एवं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इत्युच्यते । स नास्ति यस्य सोऽसत्प्रतिपक्षः । तस्य भावस्तत्त्वमिति बोध्यम् । केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् केवलव्यतिरेक्यपि तथा तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययादिति । उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात् हेतुवदाभासन्ते इति हेत्वाभासाः । तत्त्वं चानुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । बाधस्थले वह्निरनुष्ण इत्यनुमितिप्रतिबन्धकं यज्ज्ञानमुष्णत्ववद्वह्नावनुष्णत्वसाधकं द्रव्यत्वमित्याकारकं तद्विषयत्वस्य विषयतासम्बन्धेन द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः । सद्धेतुवारणाय यथार्थेति । घटादिवारणाय अनुमितितत्करणप्रतिबन्धकेति । व्यभिचारिणि अव्याप्तिवारणाय तत्करणान्यतरेति ।

---

१ अत्र तृतीयार्थः अवच्छिन्नत्वं तस्य प्रतिबन्धकत्वेऽन्वयः । ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं षष्ठ्यर्थः वृत्तित्वं तस्य यद्विषयकत्वेऽन्वयः । तथा च अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तियद्विषयकत्वावच्छिन्नं प्रकृतानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वमित्यर्थः । दोषविषयकज्ञानस्य प्रतिबन्धकत्वात् दोषविषयकत्वं प्रतिबन्धकतावच्छेदकं भवति प्रतिबन्धकता च दोषविषयकत्वावच्छिन्ना । यत्पदेन दोषस्य ग्रहणात्तत्त्वं दोषे ।

२ वह्निमान् प्रमेयत्वादित्यादौ व्यभिचारिस्थलेऽपि पर्वतो वह्निमानित्याद्यनुमितिकरणं वह्निव्याप्यं प्रमेयत्वमित्यादिज्ञानं तत्प्रतिबन्धकत्वञ्च वह्न्यभाववद्वृत्ति प्रमेयत्वमित्यादि ज्ञाने तद्विषयत्वञ्च प्रमेयत्वादौ हेताविति समन्वितं लक्षणम् ।

सव्यभिचारस्य हेत्वाभासस्य किं लक्षणं के च भेदाः ?

**सव्यभिचारोऽनैकान्तिकः[1]। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्।**

साधारणस्य हेत्वाभासस्य किं लक्षणम् ?

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः[2]। यथा पर्वतो वह्निमान् प्रमेयत्वादिति। प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्॥**

(प०) तत्रेति। साधारणादित्रितयमध्य इत्यर्थः। अथ विरुद्धेऽतिप्रसक्तिरिति मास्म दूष्यः, सपक्षवृत्तित्वस्यापि निवेशात्। अथैवमपि स्वरूपासिद्धे दूषणं जागर्तीति मा वह गर्वं[3] पक्षवृत्तित्वस्यापि तथात्वात्॥

असाधारणाऽनैकान्तिकस्य किं लक्षणम् ?

**सर्वसपक्षविपक्षव्यावृत्तिः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दो नित्यः शब्दत्वादिति। शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति।**

(न्या०) असाधारण इति। सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम्। साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम्। हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यासामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम्॥

(प०) पक्षमात्रेति। सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति सपक्षविपक्षव्यावृत्तः। केवलव्यतिरेकवारणाय[4] तद्भिन्न इत्यपि देयम्॥

---

१ बालव्युत्पत्तये प्राचीनसंकेतं दर्शयितुमाह—अनेकेति। अनैकान्तिकत्वञ्च साधारणाद्यन्यतमत्वरूपम्।

२ अयं साधारणोऽपि साध्यसामानाधिकरण्यरूप-व्याप्तिग्रहस्य प्रतिबन्धः।

३ तथा च पक्ष-सपक्ष-वृत्तित्वविशिष्टसाध्याभाववद्वृत्तिः साधारण इति फलितोऽर्थः।

४ तथा च अन्वयव्यतिरेकव्याप्तिशून्यत्वे सति पक्षमात्रवृत्तित्वमसाधारणत्वमिति फलितम्।

अनुपसंहारिणः किं लक्षणम् ?

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति ॥**

( न्या० ) अनुपसंहारिणं लक्षयति—अन्वयेति । उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः ॥[1]

( प० ) अन्वयेति । केवलान्वयिन्यतिव्याप्तिवारणाय अन्वयेति । केवलव्यतिरेकिण्यतिव्याप्तिवारणाय व्यतिरेकेति । अत्रेति । उपदर्शितानुमान इत्यर्थः ॥[2]

विरुद्धलक्षणं निरूप्यताम् ?

**साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥**

( न्या० ) विरुद्धं लक्षयति—साध्याभावव्याप्त इति ॥ साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वम् । तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रतिपक्षेऽपि । विरुद्ध-सत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः ॥ सत्प्रतिपक्षे द्वौ हेतू विरुद्ध एको हेतुरिति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ॥

( प० ) विरुद्धं लक्षयति—साध्येति । सद्धेतुवारणाय साध्या-

१ एष च व्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धः ।

२ हेतुसाध्ययोर्यत्र निश्चयस्तस्य दृष्टान्तत्वात् यत्र साध्यसंशयस्तस्य पक्षत्वात् साध्यसन्देहवत्त्वस्य साध्यनिश्चयवत्त्वस्य च विरोधात् पक्षभिन्नस्यैव दृष्टान्तत्वादिति भावः ।

भावत्वात इति । सत्प्रतिपक्षवारणाय सत्प्रतिपक्षभिन्न इत्यपि बोध्यम् । कृतेति । कार्यत्वादित्यर्थः । कृतकत्वमिति । अनित्यत्वेन व्याप्तमिति । यद्यत्कृतकं तत्तदनित्यमिति । व्याप्तिर्भवत्येव तथेति भावः ॥

सत्प्रतिपक्षस्य लक्षणं निगद्यताम् ।

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रति-पक्षः[1] । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद्घटवत् ।**

( प० ) सत्प्रतिपक्षं लक्षयति—साध्येति । यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षो हेतुर्विद्यते स हेतुः सत्प्रतिपक्ष इत्यर्थः । अयमेव प्रकरणसम इत्युच्यते । विरुद्धवारणाय हेत्वन्तरं यस्येति । वह्न्यादिवारणाय [2]साध्याभावेति ॥

कतिविधोऽसिद्धः ?

**असिद्धस्त्रिविधः । आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति ॥**

( प० ) असिद्धं विभजते—आसिद्ध इति । आश्रयासिद्धान्यतमत्वमसिद्धत्वम् ॥

आश्रयासिद्धस्योदाहरणम्—

**आश्रयासिद्धो यथा गगनारविन्दं सुरभि, अरविन्दत्वात् । सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव ॥**

( न्या० ) आश्रयासिद्ध इति । [3]आश्रयासिद्धिर्नाम पक्ष-

---

१ सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वात्साक्षादनुमितिविरोधित्वन्तस्येति भावः ।

२ ननु साधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इत्युक्तौ वह्न्यादिसाध्यसाधकस्य हेत्वन्तरस्य धूमादेः सत्त्वाद्वह्न्यादिसाध्य एव सत्प्रतिक्षव्यवहारः स्यादतः साध्याभावपदोपादानम् ।

३ आश्रयासिद्धश्च पक्षधर्मताज्ञानप्रतिबन्धकत्वम् ।

तावच्छेदकविशिष्टपक्षाप्रसिद्धिः । यथेति । अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम् ॥

( प० ) आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् । भवति हि अरविन्दत्वे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वम्, अरविन्दरूपपक्षे गगनीयत्वविरहात् । ननु किमरविन्दे गगनीयत्वविरहोऽस्त आह—अत्रेति । उपदर्शितानुमान इत्यर्थः ।

स्वरूपासिद्धस्योदाहरणम्—

**स्वरूपासिद्धो यथा । शब्दो गुणश्चाक्षुषत्वात्, रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥**

( न्या० ) स्वरूपासिद्ध इति । स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् ॥

( प० ) पक्षे हेत्वभावः स्वरूपासिद्धिः । सद्धेत्वभावेऽतिव्याप्तिवारणाय पक्षे इति । घटाद्यभाववारणाय हेत्विति । सोऽयं स्वरूपासिद्धः शुद्धासिद्ध[१]-भागासिद्ध-विशेषणासिद्ध-विशेष्यासिद्धभेदेन चतुर्विधः । तत्राद्यस्तूपदर्शित एव । द्वितीयो यथा—उद्भूतरूपादिचतुष्टयं गुणः, रूपत्वादित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वम् । तृतीयो[२] यथा-वायुः प्रत्यक्षः, रूपवत्त्वे सति स्पर्शवत्त्वादित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति विशेषणाभावे विशिष्टस्याप्यभावात् । तुरीयो यथा-अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः । तस्य स्वरूपासिद्धत्वं तु विशेष्याभावप्रयुक्तविशिष्टाभावादिति बोध्यम् ।

---

१ दुष्टलक्षणमपि हेत्वाभास एव । तथा हि—अव्याप्तलक्षणस्य भागासिद्धेरन्तर्भावः । असम्भवग्रस्तस्य च स्वरूपासिद्धेरन्तर्भावः । अतिप्रसक्तलक्षणस्य च व्याप्यत्वासिद्धेऽन्तर्भावः सिद्धसाधनस्य चाश्रयासिद्धेरन्तर्भाव इत्येवं रूपेण बोध्यम् ।

२ वायुः प्रत्यक्षः स्पर्शवत्त्वे सति रूपवत्त्वादित्यत्र रूपवत्त्वरूपविशेष्यस्य वायावभावे तद्विशिष्टस्पर्शवत्त्वरूपविशेषणस्यापि वायावभावात्तस्य स्वरूपासिद्धत्वमक्षतमेवेति बोध्यम् ।

व्याप्यत्वासिद्धस्य तदन्तर्गतस्योपाधेश्च लक्षणम् । यथा—

सोपाधिको हेतुर्व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ।

( न्या० ) व्याप्यत्वासिद्ध इति । प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम् तदेव व्यभिचारित्वम् । तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात् घटत्वादिवत् । यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति । एवं प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

( प० ) व्याप्यत्वासिद्धं निरूपयति—सोपाधिक इति । ननु कोऽयमुपाधिरत आह । साध्येति । साधनाव्यापक उपाधिरित्युक्ते शब्दोऽनित्यः कृतकत्वादित्यत्र सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रिय-

१ ननु ध्वंसरूपकार्यत्वावच्छेदेन सामान्यवत्त्वमात्रस्यापि साधनाव्यापकत्वभिया तावन्मात्रमुपाधिरस्त्विति चेन्न । उपाधिनिरूपितव्यापकत्वस्य हेतौ सद्भाव एव हेतुनि-

ग्रहणार्हत्वमप्युपाधिः स्यात्तदर्थं साध्यव्यापकत्वमुक्तम् । तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्तदर्थं साधनाव्यापकत्वमुक्तम् । उपाधिभेदमादायासम्भववारणाय व्यापकत्वशरीरेऽप्यत्यन्तपदमादेयम् । साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकशरीरेऽप्यत्यन्तपदमावश्यकं देयम् । सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्य उपदर्शितः । एवं क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका हिंसात्वात्, क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः तस्य यत्राधर्मजनकत्वं तत्र निषिद्धत्वमिति साध्यव्यापकता । यत्र हिंसात्वं तत्र न निषिद्धत्वमिति निषिद्धत्वमुपाधिः साधनाव्यापकः । क्रतुहिंसायां निषिद्धत्वस्याभावात् । 'न हिंस्यात्सर्वा भूतानि' इति सामान्यवाक्यतः 'पशुना यजेत्' इत्यादिविशेषवाक्यस्य बलीयस्त्वात् । अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकमपि तु निषिद्धत्वमेवेत्यादिकमपि द्रष्टव्यम् । द्वितीयो यथा—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः । तस्य यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात् । किन्तु द्रव्यत्वलक्षणो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय बहिःपदम् । यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च वायावुद्भूतरूपविरहात् तृतीयो यथा—ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधिस्तस्य यत्र विनाशित्वं तत्र

---

रूपिताऽव्यापकत्वस्योपाधौ सम्भवात्तस्यैवात्राऽभावात् । तथा हि—व्यापकत्वं नाम स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपम् । स्वपदस्य सामान्यवत्त्वरूपोपाधिपरत्वम् तत्समानाधिकरणवृत्त्यत्यन्ताभावो गगनाद्यवच्छेदेन कृतकत्वात्यन्ताभावस्तत्प्रतियोगित्वमेव कृतकत्वरूपहेतोरित्यत आह—अस्मदादिबाह्येन्द्रियेति । तथा च नित्यानां सामान्यवतां गगनादीनामस्मदादिबहिरिन्द्रियग्रहणानर्हत्वात्सुवचं विशेषणम् योगिनां तत्तदिन्द्रिययोग्यसूक्ष्मपदार्थानामपि भानात्तद्वारणाय—**अस्मदादीति** । अन्तर्मन इन्द्रियेणात्मग्रहणात्तद्वारणाय—**बाह्येन्द्रियेति** । एवं ह्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमात्रस्योपाधित्वे सामान्याद्यवच्छेदेनोपाधेः सत्त्वात् हेतोश्चासत्त्वेन तत्रापि पूर्वोक्तरीत्या उपाधिनिरूपितव्यापकहेत्वभावात् सामान्यवत्त्वविशिष्टबाह्येन्द्रियग्रहणार्हत्वं फलितमिति ध्येयम् ।

१ दत्तमित्यर्थः ।

भावत्वमिति न केवलसाध्यव्यापकत्वं प्रागभावे भावत्वविरहात् । किन्तु जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्वमिति साधनावच्छिन्नसाध्यव्यापकत्वमेव । यत्र जन्यत्वं तत्र भावत्वमिति साधनाव्यापकत्वं च ध्वंसे भावत्वविरहात् । एवं स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वमुपाधिः । श्यामत्वस्य नीलघटेऽपि सत्त्वान्न केवलसाध्यव्यापकत्वं किन्तु साधनावच्छिन्नसाध्यव्यापकत्वमेव । अष्टमे पुत्रे शाकपाकजन्मत्वविरहेण साधनाव्यापकत्वं चेत्यादिकमपि द्रष्टव्यम् ।

बाधितस्य किं लक्षणम् ?

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पर्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् ॥

( न्या० ) यस्येति । यस्य हेतोः साध्यस्याभावः साध्याभावः । स च प्रमाणान्तरेण प्रत्यक्षादिप्रमाणेन निश्चितः स बाधित इत्यर्थः । तथा च प्रात्यक्षिकसाध्यबाधितनिश्चये जाते[1] साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते ॥ इति न्यायबोधिन्यामनुमानपरिच्छेदः ॥

( प० ) यस्येति । सद्धेतुवारणाय प्रमाणान्तरेणेति । घटादिवारणाय साध्येति ।

इति पदकृत्यकेऽनुमानखण्डः

१ बाधस्य ग्राह्याभावनिश्चयरूपत्वात्साक्षादनुमितिप्रतिबन्धः फलम् ।

# उपमानपरिच्छेदः ।

अथोपमानन्निरूपयति—

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः तत्करणं सादृश्यज्ञानम् । तथा हि कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते ॥

( न्या० ) उपमानं लक्षयति—उपमितिकरणमिति । उपमितिं लक्षयति—संज्ञासंज्ञीति । संज्ञा नाम पदम् । संज्ञी अर्थः । तयोः सम्बन्धः शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नामातिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः फलम् । गोसदृशो गवयपदवाच्य इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ॥ इति न्यायबोधिन्यामुपमानपरिच्छेदः ॥

(प०) अवसरसंगतिमभिप्रेत्यानुमानानन्तरमुपमानं निरूपयति—उपमितीति । उपमितेः करणमुपमानमित्यर्थः । कुठारादिवारणाय-

१ ननु पद-पदार्थसम्बन्धज्ञानस्येवोपमितित्वे व्याकरणादेरपि पद-पदार्थसम्बन्धग्राहकत्वादुपमितित्वापत्तिस्तस्मात्सादृश्यज्ञानकरणत्वेन पदपदार्थसम्बन्धज्ञानस्योपमितित्वं वाच्यम् । पद-पदार्थयोः सम्बन्धस्यैव शक्तिपदार्थत्वम् । व्याकरणादेरेव चोक्तरूपशक्तिग्राहकत्वमिति निखिलतन्त्रसिद्धम् । तदुक्तम्—

"शक्तिग्रहं व्याकरणोपमानं कोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इति ।



मितीति ।प्रत्यक्षादिवारणाय उपेति । संज्ञासंज्ञीति । अनुमित्यादिवारणाय सम्बन्धेति । संयोगादिवारणाय संज्ञासंज्ञीति । असौ गवयपदवाच्य इति । अभिप्रेतो गवयो गवयपदवाच्य इत्यर्थः । तेन गवयान्तरे शक्तिग्रहाभावप्रसंग इति दूषणमपास्तम् । तथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम् । अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः । उपमितिः फलमिति सारम् । तच्चोपमानं त्रिविधं सादृश्यविशिष्टपिण्डज्ञानमसाधारणधर्मविशिष्टपिण्डज्ञानं वैधर्म्यविशिष्टपिण्डज्ञानञ्च । तत्राद्यमुक्तमेव । द्वितीयं यथा-खड्गमृगः कीदृगिति पृष्टे नासिकालसदेकशृंगोऽनतिक्रान्तगजाकृतिश्चेति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशं पिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनन्तरं खड्गमृगपदवाच्य इत्युपमितिरुत्पद्यते । अत्र नासिकालसदेकशृङ्ग एव साधारणधर्मः । तृतीयं यथा —उष्ट्रः कीदृगिति पृष्टे अश्वादिवदसमानपृष्ठो न ह्रस्वग्रीवशरीरश्चेति आप्तोक्ते कालान्तरे तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपिण्डज्ञानं ततोऽतिदेशवाक्यार्थस्मरणं तत उष्ट्र उष्ट्रपदवाच्य इत्युपमितिरुत्पद्यते ॥

इति पदकृत्यके उपमानखण्डः ॥

## शब्दपरिच्छेदः ।

अथ शब्दादीनां लक्षणं निरूप्यते—

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा गामानयेति शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ॥**

( न्या० ) शब्दं[1] लक्षयति—आप्तेति । आप्तोच्चारितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । प्रमाणशब्दत्वं[3] लक्ष्यताव-

१ आप्तवाक्यत्वं यथार्थवक्तृपदसमूहत्वं वा शब्दस्य लक्षणम् । एतन्निष्कृष्टलक्षणन्तु न्यायबोधिन्यामेव स्पष्टम् । तच्च आप्तोच्चारितत्वे सति वाक्यत्वम् । आप्तत्वस्य च प्रयोगहेतुभूतयथार्थज्ञानत्वरूपत्वात् प्रयोगहेतुभूतयथार्थज्ञानजन्यत्वं वेति बोध्यम् ।

२ कुण्डलितः पाठः प्रक्षिप्तः, प्राचीनालिखितपुस्तकेष्वभावात् ।

३ एतच्च प्रमाणनिरूपणप्रस्तावाल्लब्धम् । पूर्ववाक्ये शब्दस्य लक्षणमित्यस्य प्रमाणशब्दस्य लक्षणमित्यर्थं इति भावः ।

च्छेदकम्। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत आप्तोच्चरितत्वनिवेशः। तावन्मात्रोक्तौ जरद्गवादशादावतिव्याप्तिरतो वाक्यत्वम्। आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्। तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः। वस्तुतस्तु। पदज्ञानं करणम्। वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः। वाक्यार्थज्ञानं शाब्दबोधः फलम्। वृत्तिर्नाम शक्तिलक्षणान्यतररूपा। शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः। ईश्वरसंकेतो नाम ईश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदे शक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वं शक्यत्वम्। शक्यसम्बन्धो लक्षणा। सा द्विविधा गौणी शुद्धा चेति। गौणी नाम सादृश्यविशिष्टे लक्षणा। यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा। शुद्धा द्विविधा। जहल्लक्षणा अजहल्लक्षणा चेति। लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा। यथा गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्य-शक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकं दध्युपघातकत्वम्। तेन रूपेण दध्युपघातकानां सर्वेषां काक-बिडाल-कुक्कुट-सारमेयादीनां शक्यलक्ष्याणां सर्वेषां बोधात्। जहदजहल्लक्षणा वेदान्तिनां मते। [सा च शक्यताव-

१ प्रयोगेति। 'अर्थं बुद्ध्वा वाक्यं प्रयुङ्क्ते' इति नियमात् वाक्यप्रयोगात्पूर्वं प्रयोक्तुस्तदर्थज्ञानस्य आवश्यकत्वात् तस्य वाक्यप्रयोगहेतुत्वं बोध्यम्।

२ अत्र वृत्तौ विशिष्टवाचकशब्दस्यैकदेशं विहायैकदेशे विद्यमानत्वात् सोऽयं देवदत्त इति वाक्ये पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येनान्तःकरणविशिष्टेनानैक्यादैक्यसिद्ध्यर्थमुपाधिद्वयविनिर्मुक्ते चिन्मात्रे लक्षणेति।

च्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका यथा तत्त्वमसीत्यत्र सर्वज्ञत्व-किंचिज्ज्ञत्व-परित्यागेन व्यक्तिमात्रबोधनात् ]

( प० ) अवसरसंगतिमभिप्रेत्योपमानानन्तरं शब्दं निरूपयति— आप्तेति। शब्द इति। शब्दप्रमाणमित्यर्थः। भ्रान्त-विप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय आप्तेति। ननु कोऽयमाप्त इत्यत आह- आप्तस्त्विति। यथार्थवक्ता यथाभूताबाधितार्थोपदेष्टा। वाक्यं लक्षयति—वाक्यमिति। घटादिसमूहवारणाय पदेति। शक्तमिति। निरूपकतासम्बन्धेन शक्तिविशिष्टमित्यर्थः। अस्मादिति। घटपदाद्घटरूपोऽर्थो बोद्धव्य इतीश्वरेच्छैव शक्तिरित्यर्थः। अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वं तल्लक्षणम्। शक्तिरिव लक्षणापि पदवृत्तिः। अथ केयं लक्षणा? शक्यसम्बन्धो लक्षणा। सा च त्रिधा। जहत्-अजहत्-जहदजहद्भेदात्। वर्तते च गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाह-सम्बन्धस्तीरे। लक्षणाबीजं च तात्पर्यानुपपत्तिः। अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति। छत्रिणो यान्तीत्यादौ द्वितीया। सोऽयमश्व इत्यादौ तृतीया।

वाक्यार्थज्ञाने को हेतुः?

**आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः।**

आकांक्षा-योग्यता-सन्निधीनां कानि लक्षणानि?

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्व-**

---

१ आकाङ्क्षादियुक्तस्थले शाब्दबोधप्रकारो यथा—

घटमानयेत्यादौ घटपदार्थस्य घटस्य निष्ठत्वसम्बन्धेनाऽर्थे कर्मत्वेऽन्वयः। आङ्पूर्वकनीधातोरानयनमर्थः। तत्र निरूपकत्वसम्बन्धेन कर्मत्वस्यान्वयः। कृतिश्चाख्यातार्थः। तत्राऽनुकूलता सम्बन्धेनाऽऽनयनस्यान्वयः। आश्रयत्वसम्बन्धेन पुरुषे कृतेरन्वयस्तथा चायं शाब्दबोध-घटनिष्ठकर्मतानिरूपकानयनानुकूलकृतिमान् पुरुषः। इति।

एवं तण्डुलं पचतीत्यत्रापि तण्डुलपदार्थस्य तण्डुलपदेनोपस्थितिः। द्वितीया कर्मत्वरूपफलस्योपस्थितिः। वृत्तित्वं च संसर्गः। पचधातुना पाकस्योपस्थितिस्तत्रानुकूलत्वसम्बन्धेन तादृशकर्मत्वस्यान्वयः। कृतेश्चाख्यातेनोपस्थितिस्तत्रानुकूलत्वसम्ब-

माकाङ्क्षा । अर्थाबाधो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः । तथा च आकांक्षादिरहितं वाक्यमप्रमाणम् । यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम् आकांक्षाविरहात् । वह्निना सिञ्चेदिति न प्रमाणं योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सान्निध्याभावात् ॥

( न्या० ) आकाङ्क्षां लक्षयति—पदस्येति । अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकांक्षा । यथा घटमित्यादिस्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेनाम्पदं घटपदवदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते । अम् घट इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते । अतस्तादृशाकांक्षाज्ञानं शाब्दबोधे कारणम् । अर्थाबाध इति । बाधाभावो योग्यतेत्यर्थः । अग्निना सिञ्चेदित्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः । सन्निधिं निरूपयति—पदानामिति । असहोच्चारितानि विलम्बोच्चारितानि ॥

---

न्धेन तादृशपाकस्यान्वयः । ततश्चैत्रपदेन चैत्रोपस्थितिः । तत्राश्रयत्वसम्बन्धेन कृतेरन्वयस्तथा च तण्डुलवृत्तिकर्मतानुकूलपाकानुकूलस्याश्रयश्चैत्र इति बोधः ।

एवं चैत्रेण तण्डुल इत्यादौ चैत्रपदेन चैत्रोपस्थितिः । तृतीयया कृत्युपस्थितिः । वृत्तित्वं संसर्गः । ततः पचधातुना पाकोपस्थितिः । जन्यत्वं संसर्गः । ततः कर्माख्यातेन फलोपस्थितिः । जन्यत्वं सम्बन्धः । तण्डुलपदेन च तण्डुलपदार्थोपस्थितिः । तत्राश्रयत्वसम्बन्धेन फलस्यान्वयस्तथा च चैत्रवृत्तिकृतिजन्यपाकजन्यफलशाली तण्डुल इति शाब्दबोधः । एवमन्यत्राप्यूह्यम् ।

१ यस्य पदार्थस्य येन पदार्थेन सहान्वयस्तात्पर्यविषयस्तयोरव्यवधानेनोपस्थितिः सन्निधिपदार्थः ।

(प०) असम्भववारणाय पदान्तरव्यतिरेकप्रयुक्त इति । पुनरसम्भववारणाय पदान्तरेति । अर्थेति । आकांक्षावारणाय अर्थेति । पदानामिति । असहोच्चारितेष्वतिव्याप्तिवारणाद अविलम्बेनेति । आकांक्षावारणाय पदानामिति । आकांक्षादिशून्यवाक्यस्यात्र प्रमाणत्वं निषेधयति—तथा चेति । आकांक्षादिकं शाब्दहेतुरित्युक्तं चेत्यर्थः । अकांक्षाद्युदाहरणं दर्शयति—यथेति ॥

वाक्यभेदं प्रदर्श्यते—

**वाक्यं[1] द्विविधम् । वैदिकं लौकिकं च । वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्[2] । लौकिकं[3] त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम् ॥**

(न्या०) वैदिकमिति वेदवाक्यमित्यर्थः ॥ इदमुपलक्षणम् । वेदमूलस्मृत्यादीन्यपि ग्राह्याणि । लौकिकं त्विति । वेदवाक्यभिन्नमित्यर्थः । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ।

इति न्यायबोधिन्यां शब्दपरिच्छेदः ।

शब्दज्ञानं निरूप्यते—

**वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ॥**

(प०) नन्वेतावता शाब्दसामग्री प्रपञ्चिता । प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुता न प्रदर्शितमित्यत आह—वाक्यार्थेति । शब्दत्वं च शब्दात्प्रत्येमीत्यनुभवसिद्धा जातिः । शाब्दबोधक्रमो यथा—चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मकगमनानुकूलवर्तमानकृतिमांश्चैत्र इति शाब्दबोधः । द्वितीयायाः कर्मत्वमर्थः । धातोर्गमनम् । अनुकूलत्वं च संसर्गमर्यादया भासते । लटो वर्तमानत्वमाख्यातस्य कृतिः । तत्सम्बन्धः । संसर्गमर्यादया भासते । रथो गच्छतीत्यत्र गमनानुकूलव्यापारवान् रथ इति शाब्दबोधः । स्नात्वा गच्छतीत्यत्र

१ वाक्यमिति । वाक्यत्वञ्च । अर्थबोधकपदसमूहत्वम् ।

२ वैदिकवाक्यत्वञ्च—ईश्वरोक्तत्वे सत्यर्थबोधकपदसमूहत्वम् ।

३ लौकिकवाक्यत्वञ्च—आप्तपुरुषोक्तत्वे सत्यर्थबोधकपदसमूहत्वम् । वेदवाक्यभिन्नत्वम्वा ।

गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमानकृतिमा-निति शाब्दबोधः । क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः । एव-मन्यत्रापि वाक्यार्थो बोध्यः ।

इति पदकृत्ये शब्दपरिच्छेदः ॥

अयथार्थानुभवः कतिविधः ?

**अयथार्थानुभवस्त्रिविधः संशय-विपर्यय-तर्कभेदात् ।**

संशयस्य किं लक्षणम् ?

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति ॥**

( न्या० ) यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते—संशयेत्यादिना । एकेति । एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकज्ञानं संशय इत्यर्थः । भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्वेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव ॥

( प० ) अयथार्थानुभवं विभजते—अयथार्थेति । संशयं लक्षयति—एकस्मिन्निति । एकस्मिन्धर्मिणि एकस्मिन्नेव पुरोवर्तिनि पदार्थे विरुद्धा व्यधिकरणा ये नानाधर्माः स्थाणुत्व-पुरुषत्वादयस्तेषां वैशिष्ट्यं सम्बन्धः तदवगाहि ज्ञानं संशय इत्यर्थः । घट-पटाविति समूहालम्बनज्ञानस्य घटत्व-पटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय एकस्मिन्निति । घटः पृथिवीति ज्ञानस्यैकस्मि-

१ साधारणधर्मधीजन्यत्वेनाऽसाधारणधर्मधीजन्यत्वेन विप्रतिपत्तिजन्यत्वेन च भेदेन संशयस्य त्रैविध्यं भवति । संशयमात्रे हि विरुद्धकोटिद्वयस्मरणपूर्वकविशेषादर्शनस्य हेतुत्वम् । त्रिविधेषु संशयेषु मध्ये आद्यस्योदाहरणम्मूल एवाभिहितम् । तत्र साधारणधर्मत्वञ्च पुरुषत्वनिश्चायकशक्तिमत्त्वम् । द्वितीयस्योदाहरणं यथा—शब्दत्वं नित्यानित्यव्यावृत्तं शब्दमात्रवृत्तीतिज्ञानशब्दो नित्यो न वेति । तृतीयस्योदाहरणं यथा प्रामाण्यं स्वतो ग्राह्यं परतो वेति ॥

न्धर्मिणि घटे घटत्व-पृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादति-प्रसङ्गवारणाय विरुद्धेति । पटत्वविरुद्धघटत्ववान् पट इति ज्ञानेऽ-तिप्रसक्तिवारणाय नानेति ॥

विपर्ययस्य किं लक्षणम् ?

**मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ 'रजतम्' इति ॥**

( न्या० ) मिथ्याज्ञानमिति । अयथार्थज्ञानमित्यर्थः । विपर्ययो नाम भ्रमः ।

(प०) मिथ्येति । यथार्थज्ञानवारणाय मिथ्येति । अयथार्थवार-णाय ज्ञानेति ।

तर्कलक्षणं निरूप्यते–

**व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ॥**

(न्या०) व्याप्यारोपेणेति । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम् । अन्यथा बाधनिश्चयाभाव इष्टापत्ति-दोषेण तर्कानुत्पत्तेः ।

१ व्याप्यस्यारोप आहार्यज्ञानमित्यर्थः । आहार्यज्ञानञ्च बाधकालीनेच्छाजन्यम् । व्याप्यस्य यत् बाधकालीनेच्छाजन्यरूपाऽऽहार्यज्ञानन्तस्य व्यापके आरोपस्तर्क इत्यर्थः । उदाहरणं यथा—यदि वह्निर्न स्यादिति । अत्र हि वह्न्यभावरूपव्याप्यस्याऽऽरोपेण व्यापको धूमाभाव आरोप्यते । व्यापकत्वं नाम, अधिकदेशवृत्तित्वम् । व्याप्यत्वं च अल्पदेशवृत्तित्वम् । अस्ति ह्येतद्‍द्वयोर्गोलकाधिकरणवृत्तिसत्त्वाऽसत्त्वाभ्यां धूमाभाव-वह्न्यभावयोरिति । एतादृशरूपेणास्य विषयपरिशोधकत्वम् । व्यभिचारसंशयनिवर्तकत्वं यथा–यदि धूमो वह्निव्यभिचारी स्यात् । तदा वह्निजन्यो न स्यादित्येतादृशरूपेणेति । अत्रापि वह्निव्यभिचारित्वं वह्निजन्यत्वाभावव्याप्यत्वम् ।

२ यदि वह्निर्न स्यात्तदा धूमोऽपि न स्यादित्यादिस्थले व्याप्यस्य वह्न्यभावस्य व्यापकस्य धूमाभावस्य च व्यतिरेकविधिनिश्चयः धूमसत्त्वेन वह्निसत्त्वनिश्चयः कारण-मित्यर्थः ।

३ आहार्यज्ञानरूपव्याप्यव्यापकयोर्विपरीतबाधनिश्चयाऽभावे ।

४ धूमोऽपि मा भवत्वितीष्टापत्तिदोषेणेत्यर्थः ।

५ तर्कत्वरूपानुपपत्तेरित्यर्थः ।



( प० ) तर्कं लक्षयति—व्याप्यारोपेणेति । असम्भववारणाय व्याप्यारोपेणेति । पुनरसम्भववारणाय व्यापकारोप इति । अत्र वह्न्यभावो व्याप्यः, धूमाभावो व्यापकः । यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः, तथापि प्रमाणानुग्राहकत्वात् स उदित इति बोध्यम् । स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः सन्धौ इडानाड्यां वा मनसि स्थितेऽदृष्टविशेषेण धातुदोषेण वा जन्यते । स च मानसविपर्ययान्तर्भूतः ॥

कतिविधा स्मृतिः ?

**स्मृतिरपि द्विविधा । यथार्था अयथार्था च । प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था ॥**

सुखं निरूपयति—

**सर्वेषामनुकूलवेदनीयं सुखम् ॥**

( न्या० ) सुखं निरूपयति—सर्वेषामिति । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः । यथा श्रुते अनुकूलत्वप्रकारकवेदनाविशेष्यत्वस्य घटोऽनुकूल इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति निष्कृष्टलक्षणमुक्तम् । भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

( प० ) सुखं निरूपयति—सर्वेषामिति । सर्वात्मनामनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः । अहं सुखीत्यनुभवसिद्धसुखत्वजातिमत्, धर्ममात्रासाधारणकारणो गुणो वा सुखम् । शत्रुदुःखवारणाय सर्वेषामिति ॥

---

१ अनुकूलवेदनीयत्वे सति गुणत्वं सुखत्वमिति लक्षणं घटादावतिव्याप्तमतो निष्कृष्टलक्षणम्बोध्यम् । तच्चेतरेच्छानधीनेच्छाविषयत्वे सति गुणत्वमित्येतद्रूपम् । लक्षणान्तरं च पदकृत्ये द्रष्टव्यम् ।

दुःखं निरूपयति—

**प्रतिकूलवेदनीयं दुःखम् ॥**

( न्या० ) दुःखं निरूपयति—प्रतिकूलेति[१] अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा उपायेच्छांप्रति करणम् । अतः फलेच्छावशादुपायेच्छा भवति । एवं फले द्वेषादुपाये द्वेषः ॥

( प० ) प्रतिकूलेति । दुःखत्वजातिमत्, अधर्ममात्रासाधारणकारणो गुणो वा दुःखम् । पदकृत्यं पूर्ववत् ॥

इच्छा-द्वेष-प्रयत्नानां लक्षणानि—

**इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः ॥**

( प० ) इच्छां निरूपयति—इच्छेति । काम इति पर्यायः । इच्छात्वजातिमती इच्छा । सा द्विविधा—फलेच्छा उपायेच्छा च । फलं सुखादिकम् । उपायो यागादिः । द्वेषं निरूपयति—क्रोध इति । द्वेष्मीत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः । प्रयत्नं निरूपयति—कृतिरिति । प्रयत्नत्वजातिमान्प्रयत्नः । स त्रिविधः । प्रवृत्ति-निवृत्ति-जीवनयोनिभेदात् । इच्छाजन्यो गुणः प्रवृत्तिः । द्वेषजन्यो गुणो निवृत्तिः । जीवनादृष्टजन्यो गुणो जीवनयोनिः । स च प्राणसञ्चारकारणम् ।

---

१ प्रतिकूलवेदनीयत्वे सति गुणत्वं दुःखत्वमित्यस्यापि निष्कृष्टलक्षणन्तु इतरद्वेषानधीनद्वेषविषयत्वे सति गुणत्वरूपम् । लक्षणान्तरं पदकृत्ये द्रष्टव्यम् ।

धर्मस्य किं लक्षणम् ?

[1]विहितकर्मजन्यो धर्मः । [2]निषिद्धकर्मजन्यस्त्वधर्मः ।

(न्या०) धर्माधर्मौ निरूपयति—विहितेति । वेदविहितेत्यर्थः । निषिद्धेति वेदनिषिद्धेत्यर्थः ॥

(प०) धर्ममाह—विहितेति । वेदविहितेत्यर्थः । अधर्मवारणाय वेदविहितेति । यागादिक्रियावारणाय कर्मजन्य इति । स च कर्मनाशाजलस्पर्शकीर्तनभोगतत्त्वज्ञानादिना नश्यति । अधर्मलक्षणमाह—निषिद्धेति । वेदेनेत्यर्थः । धर्मवारणाय वेदनिषिद्धेति । वेदनिषिद्धक्रियावारणाय धर्मजन्य इति । स च भोगप्रायश्चित्तादिना नश्यति । एतावेव अदृष्टमिति कथ्येते वासनाजन्यौ च । वासना च विलक्षणसंस्कारः ॥

आत्ममात्रविशेषगुणाः के ?

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ॥

(न्या०) बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ।

संस्कारः कतिविधः, तद्भेदान् वृत्तींश्चेति—

संस्कारस्त्रिविधः । वेगो भावना स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुर्भावना आत्ममात्रवृत्तिः । अन्य-

---

१ वेदविहितकर्मजन्यत्वे सति गुणत्वं धर्मत्वम् ।

२ वेदनिषिद्धकर्मजन्यत्वे सति गुणत्वमधर्मत्वम् ।

## थाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥ इति गुणाः ॥

( न्या० ) संस्कारं विभजते—**संस्कार इति।** भावनां लक्षयति—**अनुभवेति** । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः । ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात् । अतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः । ([1]ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा । यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानस्य । दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः । सा च दण्डी पुरुष इत्याकारिका । न हि दण्डमजानानः 'दण्डी पुरुषः' इति प्रत्येति । एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डी पुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः । तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च, स्मृतिं प्रत्यनुभवस्य कारणत्वादिति चेत् । अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम् । तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञानकारणतायां न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः । अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति स्मरणसा-

[1] कुण्डलितो ग्रन्थः प्रक्षिप्तः प्राचीनपुस्तकेष्वदर्शनात्, लेखस्यातिशिथिलत्वाच्च ।

धारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः । भावनायां तु लक्षणमिदं वर्तते । तथा हि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम् । अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य भावनायां सत्त्वात् । नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम् । तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम् । न हि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते । तथा हि—ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः । तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहादिति चेद् न । स्मृतावतिव्याप्तिवारणायैव तदुपादानात् । तथा हि—स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन । इत्थं चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिः । उक्तविशेषणदाने तु स्मृतेः स्मृतिहेतुत्वाभावात्तद्व्युदासः ॥ )

( ५० ) संस्कारं विभजते—संस्कारेति । सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान्संस्कारः । घटादिवारणाय गुणत्वव्याप्येति । संयोगादिवारणाय आत्मविशेषगुणोभयवृत्तीति । ज्ञानादिवारणाय सामान्येति । द्वितीयादिपतनासमवायिकारणं वेगः । रूपादिवारणाय द्वितीयादिपतनेति । कालादिवारणाय असमवायीति । भावनां लक्षयति—अनुभवेति । आत्मादिवारणाय प्रथमदलम् ।

अनुभवध्वंसवारणाय द्वितीयदलम् । स्थितिस्थापकमाह—अन्यथेति । पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम् । गन्धवत्त्वमादाय गन्धेऽतिव्याप्तिवारणाय संस्कारत्वव्याप्येति । भावनात्वमादाय भावनावारणाय पृथिवीसमवेतेति । स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय जातीति । इति गुणा इति । द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः । द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम् । सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् ॥

कर्मणः किं लक्षणम् ?

[१]चलनात्मकं कर्म । [२]ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । [३]अधोदेशसंयोगहेतुरपक्षेपणम् । [४]शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम् । [५]विप्रकृष्टसंयोगहेतुः प्रसारणम् । [६]अन्यत्सर्वं गमनम् ॥

( प० ) चलनेति । संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म । हस्त-पुस्तकवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । ऊर्ध्वेति । अपक्षेपणवारणाय ऊर्ध्वेति । कालादिवारणाय असाधारणेत्यपि बोध्यम् । अधोदेशेति । उत्क्षेपणवारणाय अधोदेशेति । कालादिवारणाय असाधारणेत्यपि देयम् । शरीरेति । प्रसारणादिवारणाय शरीरसन्निकृष्टेति। कालादिवारणाय असाधारणं देयम् । विप्रकृष्टेति । उत्क्षेपणादिवारणाय विप्रकृष्टेति । कालादिवारणाय असाधारणमप्यावश्यकम् ।

---

१ चलनात्मकत्वे सति गुणत्वं कर्मणो लक्षणम् । निष्कृष्टलक्षणन्तु संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वरूपम् ।

२ ऊर्ध्वदेशसंयोगहेतुत्वे सत्यसाधारणत्वे च सति गुणत्वमुत्क्षेपणत्वम् ।

३ अधोदेशसंयोगहेतुत्वे सत्यसाधारणत्वे च सति गुणत्वमपक्षेपणत्वम् ।

४ शरीरसन्निकृष्टसंयोगहेतुत्वे सत्यसाधारणत्वे च सति गुणत्वमाकुञ्चनत्वम् ।

५ विप्रकृष्टसंयोगहेतुत्वे सत्यसाधारणत्वे च सति गुणत्वं प्रसारणत्वम् ।

६ कर्मादिप्रसारणान्तभिन्नत्वे सति गुणत्वं गमनत्वम् ।

सामान्यस्य किं लक्षणम् ?

**नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥**

(न्या०) सामान्यं निरूपयति—नित्यमेकमिति । नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम् । नित्यत्वविशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम् । अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिस्तद्वारणायानेकसमवेतत्वम् । अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः । जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात समवेतविशेषणम् ।

(प०) नित्यमिति । संयोगादिवारणाय नित्यमिति । कालादिपरिमाणवारणाय अनेकेति । अनेकानुगतत्वं च समवायेन बोध्यम् । तेन नात्यन्ताभावेऽतिव्याप्तिः ॥

विशेषस्य किं लक्षणम् ?

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥**[1]

( प० ) नित्यद्रव्यवृत्तय इति । घटत्वादिवारणाय नित्यद्रव्यवृत्तय इति । आत्मत्वमनस्त्ववारणाय आत्मत्वमनस्त्वभिन्ना इत्यपि बोध्यम् ।

समवायस्य किं लक्षणम् ?

**[2]नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिर्ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ गुणगु-**

१ नित्यद्रव्यवृत्तित्वे सति व्यावर्तकत्वे च सत्यात्ममनस्त्वभिन्नत्वं विशेषत्वम् ।

२ नित्यत्वे सति सम्बन्धत्वं समवायत्वम् ।

णिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्य-द्रव्ये चेति ॥

( न्या० ) समवायं निरूपयति—नित्येति । सम्बन्धत्वं विशिष्टप्रतीतिनियामकत्वम् । तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम् । ( ययोर्द्वयोर्मध्य इति । यन्निष्ठकाल-निरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्तरत्वमयुतसिद्धत्व-मित्यर्थः ॥ )

( पं० ) नित्येति । आकाशादिवारणाय सम्बन्ध इति । संयोग-वारणाय नित्येति । स्वरूपसम्बन्धवारणाय तद्भिन्न इत्यपि बोध्यम् ॥

प्रागभावस्य किं लक्षणम् ?

**अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य ॥**

(प०) प्रागभावं लक्षयति—अनादिरिति । घटादिवारणाय प्र-थमदलम् । परमाणुवारणाय द्वितीयदलम् । पुनः प्रागभावः कस्मि-न्कालेऽस्तीत्यत आह—उत्पत्तेरिति । कार्यस्योत्पत्तेः प्राक् स्वप्रति-योगिसमवायिकारणे वर्तते इत्यर्थः ।

प्रध्वंसस्य किं लक्षणम् ?

**सादिरनन्तः प्रध्वंसः । उत्पत्त्यनन्तरं कार्यस्य ॥**

( प० ) ध्वंसं लक्षयति—सादिरिति । घटादिवारणाय अनन्त इति । आत्मादिवारणाय सादिरिति । उत्पत्तीति । कार्यस्योत्प-त्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः ॥ स च 'ध्वस्तः' इति प्रत्ययविषयः ॥

अत्यन्ताभावस्य लक्षणं निरूप्यते—

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ता-भावः । यथा भूतले घटो नास्तीति ॥**

१ प्रागभाव इति । कार्योत्पत्तिपूर्वकालावच्छेदेनाऽनादित्वे सति सान्तत्वे च सति अभावत्वम् प्रागभावत्वम् ।

( न्या० ) अत्यन्ताभावं निरूपयति--त्रैकालिकेति । ( प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम् ॥

( प० ) अत्यन्ताभावं लक्षयति—त्रैकालिकेति । त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । ध्वंसप्रागभाववारणाय त्रैकालिकेति । भेदवारणाय संसर्गेत्यादि ॥

अन्योन्याभावस्य किं लक्षणम् ?

**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ॥**

( न्या० ) अन्योन्याभावं निरूपयति--तादात्म्येति ॥

( प० ) अन्योन्याभावं लक्षयति—तादात्म्येति । प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति । अत्यन्ताभाववारणाय तादात्म्यत्वेन सम्बन्धो विशेषणीयः ॥

पदार्थानुपसंहरति—

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ।**

**कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥**

इति श्रीमहामहोपाध्यायान्नम्भट्टविरचितस्तर्कसंग्रहः समाप्तः ॥

(न्या०) सर्वेषामिति । "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायस्यादिमसूत्र उक्तानां प्रमाणप्रमेयादीनामित्यर्थः । विस्तरस्त्वन्यत्रानुसन्धेयः ।

इति श्रीगोवर्धनविरचिता तर्कसंग्रहस्य न्यायबोधिनी व्याख्या समाप्ता।

(प०) पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुःखध्वंसः । आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । मुक्तात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानशालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात्स्वसमानाधिकरणेति प्रागभावविशेषणम् । दुःखानि चैकविंशतिः—शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखञ्चेति दुःखानुषङ्गित्वाच्छरीरादौ गौणदुःखत्वम् । तथा च 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरात्मज्ञानसाधननिदिध्यासनमननसाधनत्वं पदार्थज्ञाने संजाघटीति । एवं च तत्त्वज्ञाने सति शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः । तेन दोषाभावः तेन प्रवृत्त्यनुत्पत्तिः ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां प्रारब्धकर्मणां नाशः । ततो जन्माभावः ।

'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः ।'

इत्यादिवचनात् 'तमेव विदित्वातिमृत्युमेति' इति श्रुतेश्च, सगुणोपासना-काशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम् । अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारम् ॥

चक्रे चन्द्रजसिंहो हि पदकृत्यमिदं शुभम् ।
परोपकारकरणं माधवो वीक्षतामिदम् ॥

इति श्रीमत्तत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रजसिंहविरचितं पदकृत्यं समाप्तम् ॥

